(४५१) — पूर्वाधिकरणीयभेदव्यपदेशसूत्रस्य भेदविरुद्धापदेशादिति स्वभाष्यकारविवरणमिति कथनं मिथ्यैकान्तम् ॥

## अथ सारावल्यनुभवः ।

भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नाम् , शक्रादिन्यायतः स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः । तन्नाकर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां नित्यश्रीर्ब्रध्नबिम्बे श्रुत इति स य इत्युक्त एवैष एकः ॥

'ईक्षत्यधिकरणविषयवाक्ये 'तस्य तावदेव चिरं' इति शरीरपातपर्यन्तो दुःखसम्बन्ध उच्यते । तेन 'तस्यैष एव शारीर आत्मा' इति शरीरसंबन्धी पुरुषो जीव एव स्यादित्याशङ्क्य परिहृतमानन्दमयाधिकरणे स्वाभाविकस्य विश्वशरीरत्वस्य विश्वनियन्तृत्वस्य न संसारित्वापादकत्वमिति । अतः परमन्तरादित्याधिकरणं प्रवर्तते । अस्मिन्नधिकरणे नान्तर्यामित्वावस्थानमात्रेण शरीरात्मभाव उच्यते, यथा पूर्वाधिकरणे । अपि तु पाणिपादाक्षिकेशादिविभागवच्छरीरसम्बन्धीपुरुषः, तादृशसम्बन्धित्वं जीवस्यैव संभवतीति पूर्वपक्षोत्थानेन संगतिः । पूर्वं जीवसामान्यस्य निरासः, इदानीं जीवविशेषस्य निरासः इति च संगतिः' इति चिन्तामणिः । 'किं विद्याकर्मातिशयवशात् प्राप्तोत्कर्षः कश्चित्संसारी सूर्यमण्डले चक्षुषि चोपास्यत्वेन श्रूयते, किं वा नित्यसिद्धः परमेश्वर इति' इति श्रीशांकरभाष्योक्तरीत्यैव श्रीभाष्ये 'किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्यः, आदित्यादिशब्दाभिलप्यो जीव एव आहोस्वित् तदतिरिक्तः परमात्मा' इति भाषितम् । अत्र स्वभाष्ये साधितो नित्यसिद्धः परमेश्वरो मिथ्याभूत इति साहसीवदनं किं न विस्मापकम् । मिथ्याभूतेश्वरस्य कथं स्वभाष्यभाषितनित्यसिद्धत्वं संभवेत् । 'पूर्वोक्ताः खलु मनुष्यानारभ्य प्रजापतिपर्यन्ताः भूयिष्ठा-

नन्तपुण्योपचयवलसमुद्बुद्धैश्वर्याः केचित्पुरुषाः । तेष्वेव कश्चिदीश्वरः प्रवाहरूपेण कल्प्यतामित्युच्यते' इति चिन्तामणिः । 'न ह वै देवान् पापं गच्छति' इति पापराहित्यं देवेषु श्रावितमित्यभिमानः । 'उपचितपुण्यविशेषाणां ब्रह्मेन्द्रचन्द्रसूर्यादीनां विश्वामित्रादीनां ऋषीणां च मध्ये कश्चित् जीवविशेषः कल्पभेदेन स्यात्' इति नयमयूरमालिका । "तत्र स्थालीपुलाकन्यायेन किञ्चित् देवता विषयं वाक्यमुदाह्रियते" इति च । "यथैकस्मिन् शक्रेमन्वान्तरावसाने नष्टे सति पुनरुपरितनमन्वन्तरे शक्रान्तरस्य संभवस्तदन्ते चान्यस्य शक्रस्येत्येवं न्यायेन" इति पदयोजना । "त्रिगुणतनुभृतां' हिरण्मयत्वहिरण्यश्मश्रुत्वादिकं प्राकृतशरीरद्योतकमिति पूर्वपक्षः । "अकर्मोत्थदिव्याकृतिजनिमहिमा' इत्यनेन शांकरभाष्योक्तस्य नित्यसिद्धेश्वरस्य स्वेच्छासिद्धदिव्यतन्वादिकमुच्यते । "दिव्या आश्चर्यकरी शुद्धसत्त्वमयी च" इति पदयोजना । एतेन प्रमाणवचनस्थमायाशब्दस्यार्थो व्यज्यते । दिव्या आकृतिः, दिव्यं च जन्म भक्तानुग्रहार्थं स्वेच्छया परिगृह्येते भगवतेति श्रुतिप्रसिद्धं गीताप्रसिद्धञ्च । उपदेशैकगम्यः श्रुतिस्मृतिप्रसिद्धोऽयं ब्रह्ममहिमा 'तद्धर्मोपदेशात्' इति पूर्वप्रसिद्धिद्योतकसूत्रहेतुना सूच्यते । 'सर्वपुंसां शासिते'ति 'अन्तःप्रविष्टः शास्ता जनानां' इति श्रुतिः अन्तर्यामिब्राह्मणं च सूच्येते । 'रक्ताक्षं न जहाति श्रीः' इति सामुद्रिकोक्तिः" इति पदयोजनायां दर्शितम् । रक्तांभोजाक्षत्वेन नित्यश्रीमत्त्वं सूचितम् । 'भवान् नारायणः साक्षात् शङ्खचक्रगदाधरः । श्रीवत्सवक्षाः नित्यश्रीः' इति चतुर्मुखमुखेन प्राचेतसस्योक्तिरिह भाव्या । दिव्याकृतीति 'न भूतसंघसंस्थानो देहोऽस्य परमात्मनः', 'न तस्य प्राकृता मूर्तिः मांसमेदोस्थिसंभवा" इत्यादिस्मृतिभिः भगवतो हिरण्मयवपुषोऽप्राकृतत्वं स्पष्टीकृतम् । 'न सा कर्मनिमित्तजा' इति स्मृतिः स्मार्यते 'अकर्मोत्थ' इति । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्", "वेदाहमेतं पुरुषं महान्तं

आदित्यवर्णं तमसः परस्तात्" इत्यादिषु अप्राकृतरुक्माभदिव्यविग्रहवत्त्वश्रवणं सूच्यते श्रुतं इति । श्रौते उपदेशैकगम्येऽर्थे, न युक्तिप्रसरावकाश इति सूच्यते 'श्रुतः' इति । श्रुत्यैव तद्धर्मोपदेशात् नात्र कुतर्कावकाशः इति सूच्यते उपदेशपदं प्रयुञ्जानेन सूत्रकृतेति व्यज्यते 'श्रुतः' इति । तेन च सावयवत्त्वहेतुना अनित्यत्वोपपादनं दुःशकमिति भावः । चतुर्थश्लोकेनेदमुपपाद्यते । 'नित्यालिंगा स्वभावसंसिद्धिः' इति प्रमाणं स्मार्यते नित्यपदेन । 'स य इत्युक्त एवैष एकः' इति, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति पूर्वाधिकरणविद्यावाक्यं, "स य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः अमृतो हिरण्मयः' इति तैत्तिरीयवाक्यं च स्मार्यते । उत्तरवाक्यस्थमयडपि स्मार्यते । अस्याधिकरणस्य पूर्वाधिकरणशेषत्वमर्थतो गम्यते । "प्रशासितारं सर्वेषामणीयांसमणीसाम् । रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं परम्" इति प्रमाणवचनोक्तं सर्वप्रशासितृत्वं, रुक्माभदिव्यविग्रहवत्त्वं च सहपठितं स्मार्यते तृतीयपादेन । "भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इति कोशे मध्यपठितब्रध्ननामाऽत्र पठ्यते ।

"सर्वेभ्यः कल्मषेभ्यो ह्युदित इति वदत्यन्तरादित्यविद्या तस्मात् शेषाण्यनुज्ञानयत इह विभौ पुण्ययोगोऽस्तु मैवम् । आम्नातोऽनन्यशास्यः स्ववशपरकालः साधुना नैष भूयान् स्यात्पुण्ये लक्ष्मयोगादपि न सुकृतमित्यादिना पाप्म शब्दः"। 'एषः एषः' इति परमादरेणाभ्यासः कृतः श्रुत्या । तद्व्यंजनायात्राप्येष एष इत्यभ्यस्यते एतदधिकरणश्लोकेषु । श्रुतिपठितपाप्मशब्दस्थाने कल्मषशब्दः पठ्यते । कल्मषशब्दवाच्यपापमात्रग्रहणमिष्यते पूर्वपक्षिणा । ब्रह्मप्रेप्सुः उपनिषदर्थविचाराधिकारी । "कस्मै स्वदेत सुखसञ्चरणोत्सुकाय कारागृहे कनकशृङ्खलथापि बन्धः" इति न्यायेन पुण्यस्यापि बन्धकत्वस्याभाव्यात् अनिष्टत्वं मुमुक्षोः । "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति श्रुत्या वेदान्तिनं प्रति पाप्मशब्दः सुकृतदुष्कृतोभयसंग्राहकत्वेन व्युत्पाद्यते, सा च व्युत्पत्तिः

प्रदर्श्यते चतुर्थपादेन । "न ह वै देवान् पापं गच्छति" इति श्रुत्या देवानां सर्वपाप्मराहित्यमभिप्रैति पूर्वपक्षी । भूयिष्ठपुण्योपचयस्तस्यापेक्षितः महिमातिशयसिद्ध्युपपादनाय । "विशेषनिषेधे शेषाभ्यनुज्ञानं" इति न्यायमवलम्ब्य इयं श्रुतिरेव भूयिष्ठं पुण्यमभ्यनुजानाति इति पूर्वपक्ष्याशयः । अन्तरादित्यविद्याप्रतिपाद्यसूर्यस्य दिव्यपुरुषस्योदयः स्वोपासकस्यापि आत्मवत्सर्वेभ्यः पाप्मभ्य उदयस्यानुग्राहकः इत्यौचित्यरसो व्यज्यते 'अन्तरादित्यविद्या उदित इति वदति' इति । अन्यश्च रसो व्यज्यते एतन्नामपठनेन । यथेयं विद्या अन्तरादित्यसंज्ञिका अन्तरादित्यपुरुषं परमात्मानमुपास्यत्वेनोपदिशति, तथा आनन्दमयसंज्ञिका पूर्वाधिकरणविद्या आनन्दमयं परमात्मानमुपास्यत्वेनोपदिशतीति स्वरसम् । 'आम्नातः' इत्यनेन श्रुतिप्रमाणैकगम्यत्वमत्रोपदिष्टार्थानामिति व्यज्यते । आम्नातार्थानामनपोद्यत्वं च व्यज्यते । तेन च सौत्रोपदेशशब्देन व्यञ्जितार्थविशेषा व्यज्यन्ते । 'अनन्यशास्यः' । 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' इति अन्तरवस्थितेः शास्तृत्वसाहित्यं श्रुतिप्रसिद्धमिति भावः । सर्वेषामात्मा सर्वशरीरी शारीर आत्मा नान्यस्य शास्यो भवेत् । सौत्रान्तःशब्देनापीदं सर्वं व्यञ्जितम् । 'न तस्येशे कश्चन' इति श्रुतिः स्मार्यतेऽत्र 'ईष्टे मनुष्यकामानां च ईष्टे देवकामानां च' इति । 'स्ववशपरफलः' यस्योपासनेन सर्वकर्मभ्यः उदयलाभः सिद्ध्यति तस्य कथं कर्मवश्यत्वमिति कैमुत्यम् । फलशब्दः स्ववैगुण्यपापविमोक्षमभिप्रैति । 'साधुना नैष भूयान् । नो एवासाधुना कनीयान्' इति श्रुतिः प्रत्यभिज्ञाप्यते 'साधुना नैष भूयान्' इति । एतत्प्रकरणवाक्यानुसारेण तच्छ्रुतिस्थं स इति पदं 'एष' इति अत्र श्लोके विपरिणम्यते । पाप्मशब्दः पुण्येऽपि स्यात् । तथा प्रयोगे उदाहरणं 'न सुकृतं न दुष्कृतं' इत्यादिश्रुतिः । लक्ष्मयोगादित्यपरो हेतुः । अनिष्टफलसम्बन्धित्वरूपं पाप्मलक्ष्म पुण्येऽप्यस्ति संसारान्मुमुक्षोः ॥

प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्
तद्रूपं रूपमैशं दिवि कनति तथा शेषशेषाशनादेः ।
नित्यं तत्सूरिसेव्यं परतरमजहत्स्वस्वभावः स देवः
पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः ॥

दिव्याकृतीति प्रथमश्लोकोक्तं दिव्यत्वमप्राकृतत्वमिति निरूप्यते । अस्या आकृतेस्तमसः परत्वं श्रुतिप्रसिद्धम् । 'तमसः परमो धाता शङ्खचक्रगदाधरः' इति प्राचेतसः । 'तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेः महत्' इति पराशरः । 'वैरूप्यं – विरूपं' इति चिन्तामणिः । भारतादिवचनानि पूर्वमेवोदाहृतानि । शुद्धसत्त्वमयी त्रिपाद्विभूतिः, तथैव भगवद्दिव्यतनवः । 'स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणम् ।' 'त्रिपादस्यामृतं दिवि' इति सर्ववेदपठितपुरुषसूक्तप्रसिद्धं शुद्धसत्त्वम् । अस्मिन्नधिकरणे भगवद्विग्रहस्य शुद्धसत्त्वमयत्वं बोध्यते । ज्योतिरधिकरणविषयवाक्येन अनुत्तमलोकभूतत्रिपाद्विभूतेरमृतत्वं बोध्यते । शुद्धसत्त्वसामान्यस्याप्राकृतद्रव्यत्वं प्रथमपादेन श्रुतिस्मृतिप्रसिद्धत्वेनोपपाद्यते । 'अव्यक्ततोऽन्यत्' । 'गुणसत्त्वाद्विलक्षणं' इति प्रमाणवचनं स्मार्यते । 'प्रकृतिं स्वामधिष्ठाय संभवामि' । 'अत्रावतारोपयुक्ताऽन्याप्रकृतिरुच्यते । प्रकृतिशब्दस्यात्र स्वासाधारणस्वभावभूतदिव्यविग्रहपरता वा' । अस्यां योजनायां प्रकृतिशब्दोऽवतारोपादानभूतदिव्यविग्रहमाह' इति तात्पर्यचन्द्रिका । 'आदित्यवर्णं तमसः परस्तात्' इत्यनेनाप्राकृतत्वं स्वासाधारणनिरतिशयदीप्तियुक्तत्वं च सिद्धम् । तत्प्रकरणे च देशविशेषवर्तित्वनित्यसूरिसेव्यत्वलक्ष्मीपतित्वादिकमपि भाव्यम्' इति च तत्रोक्तं भाव्यम् । 'कनति – दीप्यते । तद्रूपमित्यस्य तादृशशुद्धसत्त्वद्रव्यात्मकमेव' इति पदयोजनार्थः । ऐशं रूपं—ईश्वरविग्रहः । 'तथा शेषशेषाशनादेः' । यथा अस्यां विद्यायां 'तदमुष्यरूपं' इत्यतिदेशः क्रियते, तथाऽत्र नित्यसूर्यादिरूपेषु तादृक्त्वं कथ्यते । 'नित्यं तत्' । 'नित्यसिद्धे तदाकारे' इत्यादिकं प्रमाणं स्मार्यते ।

'परतरं' – सर्वविग्रहाणामादिभूतं, श्रेष्ठतमं च । 'अजहत्स्वस्वभावः ।' पुंसां संसारशान्त्यै' अपारकरुणया संसारिणां संसारनिवृत्त्यर्थं स्वयं संसरतीवेति करुणाकाष्ठा व्यज्यते । 'विपरिणमयति' — स्वाश्चर्यशक्त्या स्वमाययाप्राकृतं दिव्यं प्राकृतवद्विचित्रं भासयति । 'तदेवाह — नित्यं दिव्यरूपं उपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपं संस्थानं करोत्यपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः परमात्मा' इति श्रीभाष्यम् ॥

देहत्वात्सप्तधातुत्रिमलमघभवं दुःखकृन्नाशयुक्तं
सांशत्वादेव हेतोरिति यदि, तदसद्धर्मिमानोपरोधात् ।
बाधः शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथापि प्रसंगात्
यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥

शास्त्रेणापूर्वतयोपदिष्टेऽर्थे सावयवत्वादिहेतुबलेन दिव्यविग्रहस्यानित्यत्वं तर्कयितुं न योग्यम् । 'आम्नायस्यार्थं प्रतिपत्तुं प्रभवामो वयं नाम्नायं पर्यनुयोक्तुम्' इति भगवत्पादभाषितमत्र भाव्यम् । सौत्रोपदेशपदेनेदं व्यञ्जितम् । 'देहत्वात्' इत्येको हेतुः । देहत्वात् सप्तधातुत्रिमलमघभवं दुःखकृच्च' । 'सांशत्वादेव हेतोः नाशयुक्तं' । 'शास्त्रैकवेद्ये' इति सौत्रोपदेशपदव्यञ्जितोऽर्थः सूच्यते ॥

यथा भगवद्विग्रहस्यात्र हिरण्मयत्वमुच्यते, तथा नित्यस्थानस्यापि 'प्रभुविमितं हिरण्मयं' इति हिरण्मयत्वं निगदितं दहरवाक्ये । सर्वं तत् शुद्धसत्त्वमयम् ॥

इति अन्तराधिकरणम् ॥

---

श्रीः ।

## आकाशाधिकरणम् ।

आकाशप्राणादिशब्दैः शङ्कितं ब्रह्मणो जगत्कारणत्वलक्षणस्यासंभवं व्यवच्छिद्य, ब्रह्मणि जगत्कारणत्वप्रसिद्धिः सम्पाद्यतेऽस्मिन्पादे । अत्र ब्रह्मणस्तत्प्रसिद्धिं सम्पाद्य "सर्वत्र प्रसिद्धोपदेशात्" इत्यनन्तरपादारंभे सिद्धवदुच्यते । आकाशप्राणज्योतिरिन्द्रशब्दाः तत्तद्विशेषार्थवाचकत्वेन प्रसिद्धाः । अन्यत्र रूढिं भंक्त्वा तस्मिंस्तस्मिन्वाक्ये तेषां ब्रह्मपरत्वं समर्थ्यते । "नामात्मकानां शब्दानामत्र समन्वयः" इति श्रीमध्वभाष्योक्तं न्याय्यमेव । सम्मतं चैतत् इतरभाष्ययोरपि । "प्रथमेपादेऽर्थान्तरप्रसिद्धानां केषाञ्चिच्छब्दानां ब्रह्मविषयत्वहेतुप्रतिपादनेन कानिचिद्वाक्यानि ब्रह्मपरतया निर्णीतानि" इति श्रीशांकरभाष्यम् । "इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते "आकाशस्तल्लिंगा' दित्यादिना पादशेषेण" इति श्रीभाष्यम् । आकाशवायुतेजसां क्रमेण कारणत्वं निरस्यते । अन्तराधिकरणाद्यधिकरणचतुष्टयस्य विषयवाक्यानां छान्दोग्ये पठनक्रमोऽप्यनुसृियते सूत्रकारेण ॥

"अधिकरणगणैस्तद्गुणानुद्गृणाति" इति ब्रह्मगुणसुरभिकुसुमानां मालारूपेण ग्रथनमेतदध्यायसूत्रकृत्यम् । ब्रह्मतदद्भुतगुणप्रतिपादकानां वाक्यानां ब्रह्मणि समन्वयः क्रियते । "प्रथमतरं प्रतीतमपि सत् (भूताकाशं) वाक्यशेषगतान् ब्रह्मगुणान् दृष्ट्वा न परिगृह्यते" इत्यत्र शांकरभाष्यं ब्रह्माद्भुतगुणानां ग्रथनं समन्वयाध्यायसूत्रकृत्यमिति प्रथयति । "वैशेषिकलिंगात् आदित्यपुरुषस्य जगत्कारणत्वमुक्तम् । तत्र, लिंगतः प्रबलया श्रुत्या भूताकाशस्यैव कारणत्वमित्याक्षेपेणोत्थानम्" इति नयमयूखमालिका । अत्र आकाशश्रुत्या पूर्वपक्षः । भूताकाशस्यैतत्प्रकरणोक्ताकाशादिसर्वभूतकारणत्वाद्यो ग्यत्वात्, सर्वतोज्यायस्त्वसर्वप्राप्यत्वानन्त्यानां

प्रकरणशोधितानां भूताकाशातिरिक्तजगत्कारणचिदानन्दपरमपुरुष एवा-न्वययोग्यत्वात्, "हवा" इति सर्वकारणत्वेन पुरोवादानुसरणस्य स्पष्टत्वात्, पूर्वप्रसिद्धिपरामर्शिना सौत्रतच्छब्देन तस्यापि सूचनात्, भूताकाशस्य कारणत्वनिषेधः, जगत्कारणस्य तदतिरिक्तवस्तुत्वं च साध्येते । आकाश इति पक्षपदेन, भूताकाशपरत्वे एकपदसामर्थ्यरूप-श्रुतिप्रमाणं सूच्यते । रूढिर्योगमपहरतीति न्यायः सूच्यते । अनन्यथा-सिद्धलिंगबलेन भूतविषयाकाशश्रुतिर्भज्यते । ऐन्द्रीन्यायः स्मर्तव्यः । एतदर्थमेव धर्मशब्दं विहाय लिंगशब्दः पठितः । श्रुतिलिंगयोर्बलाबलविचारः सूच्यते लिंगपदेन । 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इत्युक्तरीत्या अन्तरादित्यदिव्यपुरुषसतत्भावनेन उपचितभक्तीनां करुणामयस्य ध्येयस्य सर्वत्राकाशमानत्वरूपरसवत्तमयोगार्थप्रदर्शनेन ब्रह्मरसोनुभाव्यते। विचारितायामानन्दमयविद्यायां "यदेष आकाश आनन्दो न स्यात्" इति निगदितम् । आकाश इति आनन्दसमानाधिकरणाकाशपदेन आकाश-वदपरिच्छिन्नत्वं, "आनन्दरूपममृतं यद्विभाति" "आत्मा पश्चादात्मा पुरस्तादात्मा दक्षिणतः आत्मा उत्तरतः" इत्यादिश्रुत्युक्तरीत्या सर्वत्र प्रकाशमानत्वं चार्थः इति सूचयति सूत्रकारः । आकाशते आकाशयति इति योगव्युत्पत्तिः प्रदर्श्यते कारणस्यानन्दब्रह्मणः आकाशपदसमर्पित-योगार्थविशेषविशिष्टत्वबोधनाय । जन्मादिकारणस्यानन्दे विश्रान्तिः प्रदर्शिता तैत्तिरीयश्रुतौ "आनन्दाद्येव खल्विमानि भूतानि जायन्ते" इति । अत्र "सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यादिकं पठ्यते । 'आकाश आनन्दो जगत्कारणं' इति श्रुतिद्वयपरामर्शेन सिद्ध्येत् । तथा च जगत्कारणीभूतानन्दब्रह्मणः सर्वत्र आनन्दतया प्रकाशमानत्वं अभ्यासेनानुभवगोचरीकरणीयमिति सूत्रकारस्याशयो व्यज्यते सूत्राक्षरैः पुरोवादभूतानन्दमयविद्या-वाक्येनाकाशवाक्यस्य सहपठनानुभवादिकर्तव्यत्वसूचनेन च । 'अनन्तं ब्रह्म' इति तद्वाक्योक्तमानन्त्यरूपब्रह्मलिंगश्चात्र 'तल्लिंगात्' इति

सूच्यते । अन्तवत्त्वेन शालावत्यपक्षः प्रतिक्षिप्तो जैवलिना । अचेतने प्रधाने चेतनानामप्ययो न संभवेत्, किन्तु कस्मिंश्चित् स्वयंग्रहाश्लेषसुखप्रदपरमचेतन एव तत्संभवः इति स्वाप्ययसूत्रेण सूचितम् । सर्वप्राणिनामप्ययस्थानत्वरूपपरायणत्वं न जडे आकाशे संभवेत्, किन्तु तदितरे आनन्दमये चेतने एवेति 'तल्लिङ्गात्' इति परायणत्वधर्मस्य जडेऽसंभवं, तदतिरिक्तचिदानन्दवस्तुन्येव संभवञ्च पूर्वप्रसिद्धत्वेनानुवदति तल्लिङ्गात् इत्यत्र तच्छब्देन । स्वस्मिन्नविभागतया प्रवेशेनानन्दप्रदत्वरूपपरायणत्वमित्यादिकं जडेतरधर्मत्वेन पूर्वमेव व्युत्पादितम् । देवमनुष्यादीश्वरत्वरूपं, सर्वगीतिस्तूयमानत्वरूपं च सर्वतो ज्यायस्त्वं पूर्वाधिकरणवाक्यसूचितम् । इमे धर्माः 'तल्लिंगात्' इति पूर्वमेव प्रसिद्धवद्गृह्यन्ते । 'तदसाधारणलिंगात्' इत्यर्थबोधनेन भूताकाशस्य तदयोग्यता सूच्यते । अत्र कारणभूतानन्दब्रह्मणो ध्यानस्य सतताभ्यासेन तस्य सर्वत्रानन्दसारतया प्रकाशमानत्वं करुणासागरब्रह्मकरुणया लभ्येतेति सूत्रकारस्य निपुणोपदेशः । 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' इति वाक्ये 'यदेष आकाश आनन्दो न स्यात्' इति खण्डस्यार्थोऽत्र सूच्यते । 'को ह्येवान्यात्कः प्राण्यात्' इति खण्डस्यार्थोऽनन्तराधिकरणे सूच्यते । 'यदतः परो दिवो ज्योतिर्दीप्यते' इति ज्योतिरधिकरणवाक्येन ज्ञानानन्दरूपब्रह्मज्योतिषः सर्वत्र भक्तानां तद्रूपतया प्रकाशमानत्वरूपरसस्य सूचनमपि सुवचम् । त्रिपाद्विभूतिवदेकपाद्विभूतिरपि मुक्तानन्दभाक् भूयादित्याशयः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति तैत्तिरीयोक्त्यनुसारेणादित्यादिसर्वान्तःस्थत्वं सूचितं नारायणपरब्रह्मणः पूर्वाधिकरणेन, विशिष्य च 'भेदव्यपदेशाच्चान्यः' इत्यन्तर्यामिब्राह्मणपरामर्शिसूत्रेण । अत्र तस्य आकाशवदन्तर्बहिश्च सर्वत्र व्याप्तत्वं सूच्यते । ब्रह्मणि प्रयुज्यमान आकाशशब्दः असंगत्वव्यापित्वसूक्ष्मत्वादिब्रह्मगुणान् लक्षयेदित्यपि सूत्रकाराशयः । 'आकाशवत्सर्वगतश्च नित्यः' 'यावान् वायमाकाशः तावानेषोऽन्तर्हृदय आकाशः' इत्यादिश्रुतयः, 'यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् । तथा मत्स्थानि भूतानि

5

सर्वाणीत्युपधारय' इति गीता चाकाशोपमानं प्रदर्शयन्ति ब्रह्मभविष-बोधने । 'अत एव चोपमा जलसूर्यकादिवत्' इति सूत्रं, तत्पराम्बुश्रा-काशोपमानश्लोकश्च भाष्ये । 'वाक्यशेषवशात् असाधारणगुणश्रवणा-त्परं ब्रह्मेति निर्धारितं भवति' इति भगवत्पादभाष्यं, सूत्रकारस्य ब्रह्मगुण-प्रदर्शने पैदंपर्यं गमयति निर्गुणसमन्वयप्रत्याशां च शमयति । आकाश-वाक्यप्रतिपाद्यस्य परब्रह्मत्वमेव स्पष्टं भाषितं भगवत्पादैः । एतद्वाक्य-गम्यं ब्रह्म निर्गुणं वा सगुणं वेति पृच्छामः । वृत्तपूर्वाधिकरणत्रय-तद्विषयवाक्यप्रतिपादितं ब्रह्मैवात्रापि प्रतिपाद्यते । सगुणनिर्गुणरूपभेदः सूत्रात्यन्तबाह्यः । 'परस्य ब्रह्मण इदं लिंगं' इति भाष्यवाक्यं कारणस्य परब्रह्मत्वं दृढीकरोति । 'परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्यादा' इति च सुदृढं परब्रह्मण एव कारणत्वेन सर्ववेदान्त-प्रसिद्धिर्भाषिता । सैव प्रसिद्धिः सूचिता सूत्रकृता 'सर्वत्र प्रसिद्धोप-देशात्' इति सगुणशांडिल्यविद्याधिकरणे । कारणं च सगुणमेवेति प्रदीपकृता भूयः शपथनं क्रियते ।

---

## अथ प्रश्नोत्तरविमर्शः ।

आकाशाधिकरणेन गतार्थतया दहरादेरनवसर इत्याशङ्क्य, विषयवाक्यानां स्पष्टास्पष्टब्रह्मलिंगत्वादिना वैषम्यमिति पौनरुक्त्यपरिहारः क्रियते साहसया । नेदं समीचीनम् । छान्दोग्यदहरवाक्ये आकाश-स्याप्यन्वेष्टव्यत्वमुच्यते इति भाति । तदेकवाक्यभूतप्रजापतिवाक्येऽपहत पाप्मन आत्मनोऽन्वेष्टव्यत्वमुच्यते । 'दहं विपाप्मं' इति तैत्तिरीयश्रुतौ, दहराकाशो न ब्रह्म, तस्मिन् यदन्तस्तत् ब्रह्म, अल्पत्वश्रुतिरस्ति तत्र दहराकाशे । अस्मिन्नधिकरणे व्युत्पाद्यमाना आकाशशब्दस्य ब्रह्मणि श्रुतिप्रसिद्धिरुपजीव्यते दहराधिकरणे 'प्रसिद्धश्च', इति सूत्रेण । न्याय-भेदप्रदर्शने उद्यमः क्रियते दहराधिकरणे प्रदीपकृतैव शारीरकन्यायसंग्रह-दीपिकायाम् ॥ 'श्रौती च स्यात्प्रसिद्धिर्भगवति बलिनी लिंगवर्गैः सकार्या' इति दहराधिकरणसारावली भाव्या ॥

श्रीः ।

# अथ सारावलिश्लोकरसाः ।

इत्थं विद्याचयेण स्थिरचरचिदचिद्देहिनस्सर्वहेतोः
अव्यक्ताज्जीववर्गादपि समधिकता यद्यपि स्यात्तथापि ।
उत्थानद्वारभेदात्क्रमत इह मृदूपक्रमान् क्रूरनिष्ठान्
अध्यायेऽस्मिन्निरुन्धन् अधिरणकगणैस्तद्गुणानुद्गृणाति ॥

वृत्ताधिकरणत्रयमेकपेटिका । तत्त्रिकस्यार्थैक्यमुच्यते पूर्वार्द्धे । ऐतदात्म्यमिदं सर्वमित्यादिनोक्तं चिदचिच्छरीरत्वम् । 'शारीर आत्मा' इत्यपि तदुक्तम् । "भेदव्यपदेशाच्चान्यः' इत्यन्तरधिकरणसूत्रेणादित्य-जीवादिसर्वशरीरकत्वावगमकं शारीरकब्राह्मणं परामृष्टम् । 'इत्थ' मिति पदेनाव्यवहितपूर्वसूत्रेणैवेदं स्पष्टीकृतमित्यपि व्यज्यते । 'सर्वहेतोः' इत्यनेन, उक्तस्य जन्मादिलक्षणस्य ब्रह्मणि समन्वयः प्रत्यपादीत्युच्यते । 'अव्यक्तात' समधिकतेक्षत्यधिकरणोक्ता । 'नाशब्दं किन्तु तत्समधिकं' इति तदधिकरणप्रतिज्ञासूत्रेणाव्यक्तभिन्नत्वं, 'भेदव्यपदेशाच्च' इति सूत्रेण जीववर्गादन्यत्वं चोक्तम । "नेतरोनुपपत्तेः, 'भेदव्यपदेशाच्चान्यः' इति सूत्राभ्यां, इतरः अन्यः इति अस्मिन्पादे साध्यसमर्पणं सूच्यते समधिकता इति । कारणस्य एतद्व्यतिरिक्तत्वप्रसाधनेन ब्रह्मणि जन्मादिकारणत्व-प्रसिद्धिस्सम्पाद्यते । "उत्थानद्वारभेदात्' इति पादभेदोपाधिभूतपूर्व-पक्षोत्थानहेतुप्रभेदाः सूच्यन्ते । अस्पष्टतरमस्पष्टं स्पष्टं छायानुसारि च" इति तद्भेदाः । 'स्पष्टब्रह्मलिंगं' इत्यद्वैतोक्तमत्रास्पष्टतरजीवलिंगमिति कथ्यते । जीव इति पूर्वपक्षोत्थानमुद्दिश्य तथोच्यतेऽस्माभिः । 'मृदूपक्रमांक्रूरनिष्ठान्', 'यथा युद्धेषु पदात्यश्वगजरथानां पूर्वपूर्वदुर्बलानां दुर्बलभंगे प्रबलयोधनं" इति चिन्तामणिः । सर्वाधिकरणसाधारणं भगवद्गुणविशेषानुसन्धानं प्रधानं प्रयोजनम्" इति श्लोकहृदयमिति चिन्तामणिः । प्रत्यधिकरणमस्मिन्नध्याये सूत्राक्षरैरिदं समर्थ्यते । प्रायेण ऋजुतया सूत्राणामर्थस्तथैव भाषितश्शांकरभाष्ये । 'अधिकरणगणैः'

त्यस्य "सर्वैरप्यधिकरणै" रिति पदयोजनार्थः । न कुत्रापि निर्गुण-प्रतिपादनमस्तीति व्यज्यते । प्रत्यधिकरणं भगवद्गुणांस्तद्भक्तिवर्धनाय प्रतिपादयति" इति पदयोजना । पादान्तश्लोकैश्चेदं स्पष्टीकरिष्यते ॥

शब्दैस्तद्ब्रह्ममुख्यैः श्रुतिशिरसि मितं कारणं किञ्चिदेकं
संकल्पाभ्यासरूपैरतदनुगुणैश्चिन्तितस्तद्विशेषः ।
भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः
क्षिप्त्वा तत्पादशेषे श्रुतिसमुदयना संभवोक्त्या भुनक्ति ॥

अध्यायशेषकृत्यं पूर्वश्लोकेनोक्तम् । पादशेषकृत्यमनेन श्लोकेनोच्यते । जिज्ञासाधिकरणमारभ्य सद्ब्रह्मेत्यादिसाधारणशब्दघटितानि वाक्यान्युपात्तानि । संकल्पपदेनेक्षणं गृह्यते । अभ्यासशब्देन निरतिशयदशाशिरस्कतया 'यतो वाच' इति श्रुत्यभ्यासेनोक्तं निरतिशयानन्दत्वमुच्यते । रूपशब्देन 'हिरण्मय इत्याद्युक्तदिव्यविग्रहो गृह्यते । 'तदननुगुणैः' शङ्कितब्रह्मेतरप्रधानजीवदेवताद्यसंभावितैः । तदननुगुणैः — तदसंभावितैः नाशब्दं इतरः अन्यः इति साधितम् । 'नामभिः' आकाशादिविशेषनामश्रुतिभिः एतेन शब्दैरितिप्रथमपदस्य साधारणश्रुतिशब्दैरित्यर्थो ग्राह्यो गोबलीवर्दन्यायेन । 'भूताकाशादिशङ्काजननसमुचितैः' । नामश्रुतिबलेन पूर्वपक्षः शिष्टाधिकरणेषु । शङ्कामात्रं किञ्चिज्जनयन्ति । सा च शङ्का उद्यन्त्येव निरस्यते । 'श्रुतिसमुदयनासंभवोक्त्या' सुस्पष्टब्रह्मलिंगबलेनारूढ्यर्थस्योदय एव न संभवेदित्युपपाद्यते इति व्यज्यते 'समुदयनासंभव इति । शङ्काया मृदुत्वमस्मिन्पादे । 'कारणस्थैः नामभिः' । आकाशवाक्ये आकाशपदबोध्यस्य कारणत्वमनपलपनीयम् । तदभ्युपगम्यैव तस्य योगार्थवर्णनेन ब्रह्मपरत्वं योजनीयम् । कारणस्था एव आकाशप्राणादिशब्दाः । 'क्षिप्त्वा तत्' सदादिसामान्यशब्दबलेन प्रतिपादितं ब्रह्मकारणत्वं क्षिप्त्वा' । 'भुनक्ति' अवति । भुजोऽनवने ब्रह्मगुणकुक्षिंभरैर्निर्गुणवादात् ब्रह्ममहिमधर्मान् रक्षति । 'परमात्मलिंगं सुरक्षितं' इति पदयोजना ॥

आकाशप्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ
ज्योतिश्शब्दस्तु रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।
प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-
त्येवं स्यात्पेटिकैपाद्विकयुगलवती शब्दवृत्तिक्रमेण ॥

अत्र आकाशप्राणाधिकरणद्विकं एकाऽवान्तरपेटिका । अनन्तराधिकरणयुगमपरा । रूढिभङ्गं विना आकाशप्राणशब्दयोरर्थवत्त्वानवकाशः । योगार्थवर्णनेनैव तेषां सार्थक्यम् । इतरथाऽनर्थक्यम् । रूढ्यर्थस्यात्यन्तानवकाशात् योगार्थेनैव सार्थक्यं लभ्यते । योगार्थग्रहणेऽङ्गतरसाः पूर्वमेव प्रदर्शिताः । उत्तराधिकरणद्विकरूढिभङ्गं विना रूढ्यर्थभूतज्योतिरिन्द्रादिविशिष्टब्रह्मार्थग्रहणं स्वरसम् । ज्योतिश्शब्दः तेजसि रूढः । 'यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति गीता । दिव्यतेजोविशिष्टं पुरुषं प्रसिद्धवदुपदिशति ज्योतिर्वाक्यम् । ज्योतिश्शब्दस्य रूढ्यर्थविशिष्टपरत्वम् । तथेन्द्रशब्दस्य इन्द्रविशिष्टतच्छरीरकब्रह्मपरत्वम् । 'परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी' । 'त्रिशीर्षाणं त्वाष्ट्रमहनं' इतीदं प्रख्यातेन्द्रासाधारणं लिंगम् । इदमभिप्रेयते प्रख्यातशब्देन । वैश्वानराधिकरणे 'तथा दृष्ट्युपदेशात्' 'साक्षादप्यविरोधं जैमिनिः' इति सूत्रितं भाष्यम् । 'अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते ।' 'पूर्वं जाठराद्युपाधिको वा परमेश्वर उपास्य इति उक्तमन्तः प्रतिष्ठितत्वाद्यनुरोधेन । इदानीं तु साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते । विश्वश्चायं नरश्च, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति वा विश्वानरः परमात्मा । सर्वात्मत्वात्', इति शांकरभाष्यं भाव्यम् । 'अनितरगतिकौ' अनन्यगतिकानां, अकिञ्चनानां अनितरशरणानां अवकाशदानेन रक्षणं कार्यमिति व्यज्यते । 'प्रथयति पुरुषं दिव्यतेजोविशिष्टम्' । 'पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम् 'पादोऽस्य विश्वाभूतानि

त्रिपादस्यामृतं दिवि' इत्यनेन मंत्रेण । तत्र च चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसंबन्धिनिर्दिष्टम् । तदेवेह द्युसंबन्धात् निर्दिष्टमिति प्रत्यभिज्ञाप्यते' इति शांकरभाष्यम् । 'प्रथयति पुरुषमित्यादिना पुरुषसूक्तपठितमन्त्रप्रसिद्धत्रिपादमृतविभूतिज्वलत्पुरुषविशेषप्रत्यभिज्ञापनं व्यज्यते । अनुत्तमेषु लोकेषु दिवो ज्योतिर्दीप्यते' इत्येतद्वाक्येऽपि तदुक्तम् । 'न केवलं पूर्ववाक्यात् ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परस्यामपि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म' इति श्रीशांकरभाष्यमनुस्यूततया सूत्रैः सगुणब्रह्मरसप्रदर्शनं प्रथयति ॥

अत्राकाशस्त्वशेषप्रसवविलयभूः साम्नि दृष्टः स्वनाम्ना
निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितः स्वात्मनस्संभवोक्त्या ।
नैवं सिद्धानुवादो ह्ययमथ च परप्राप्यतादिर्न तस्मिन्
तत्कर्तात्माविपश्चित् श्रुत इति विहता स्वात्मनस्तत्प्रसूतिः ॥

'अत्र साम्नि' पूर्वविचारितछान्दोग्य प्रघानन्तरं भूताकाशे रूढेनाकाशशब्देन कारणं निर्दिश्यते । अयं च विशेषनामशब्दः । श्रुतिरयं शब्दः इत्याक्षेपेणोत्थानम् । 'स्वनाम्ना' स्वस्मिन् रूढेन, स्वासाधारणशब्देन । 'अशेषप्रसवविलयभूः' 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इत्यशेषसृष्टिलयहेतुत्वम् । 'आकाशादेव समुत्पद्यन्ते' इति सर्वस्योत्पत्तिलयस्थानत्वमुच्यते, न तत्कर्तृत्वमिति व्यज्यते 'प्रसवविलयभूः' इति । न केवलं सामच्छन्दोगे, किन्तु याजुषतैत्तिरीयेऽपि आकाशस्य कारणत्वमुच्यते 'आत्मन आकाशः संभूतः' इति, इत्यपि भावः । एतद्वाक्योदाहरणेन फलद्वयमुद्दिश्यते पूर्वपक्षिणा । 'सर्वाणि आकाशादेव' इति वाक्ये आकाशस्यापि सर्वपदेन संग्रहोऽस्ति । कथं स आकाशः स्वस्मादेवोत्पद्यते इति शंका स्यात् । सा शङ्काऽनेन वाक्येनापनोद्यत इत्यभिमानः । आत्मनः—स्वस्मात् आकाशः संभूतः इत्यर्थोऽभिमन्यते । 'स्वात्मनस्संभवोक्त्या' इतीदं असंभवशङ्कानिराकरणमपि प्रयोजनमिति व्यंजयति । स्वात्मनः आकाशस्य

संभवस्य संभवः श्रुत्यैवोक्त इति भावः । 'अनितरजनितः आकाश' इति साध्यते । 'सिद्धानुवादो ह्ययं' नात्र कारणस्यापूर्वतया बोधनमिष्यते श्रुत्या । पुरोवादवाक्यसिद्धं कारणमनूद्यते केवलमनेन वाक्येन 'इमानि भूतानि' इति । 'तल्लिङ्गात्' इति पूर्वोक्तानुवादरूपतासूचनमपि । 'तल्लिङ्गात्' तदसाधारणधर्मेभ्यः । सर्वज्यायस्त्वपरायणत्वानन्त्येभ्यः । 'ततो ज्यायांश्च पूरुषः' इति विचारयिष्यमाणे ज्योतिर्वाक्यपूर्ववाक्ये वक्ष्यमाणं सर्वस्मात् ज्यायस्त्वमत्र 'आकाशो ह वै ज्यायान्' इत्युच्यते असंकोचन्यायेन । 'चेतनानां परमप्राप्यं' इति परायणशब्दस्यार्थः भापितः । आदिपदेन ज्यायस्त्वानन्त्ये ग्राह्ये । 'न तस्मिन् आकाशे संभवति' किन्तु आकाशे ब्रह्मण्येव संभवति । 'तत्कर्ता' सर्वाणि भूतानि' इत्यनेन संगृहीतस्याकाशस्यापि कर्ता । 'आत्मा विपश्चित्', 'ब्रह्मणा विपश्चिता तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति खलु तैत्तिरीयवाक्यम् । 'एतस्मादात्मन' इति पूर्वोक्तविपश्चित् ब्रह्म गृह्यत इत्यर्थः प्रदर्श्यते । 'आत्मा' इति 'आत्मशब्दात्' इति पूर्वोक्तहेतुः स्मार्यते । 'विविधं पश्यच्चित्त्वं इति विपश्चिच्छब्दार्थः । 'श्रुतः पूर्वविचारिते तैत्तिरीये श्रुतः । एवमर्थत्वात् तच्छुतेः, 'स्वात्मनः भूताकाशस्य प्रसूतिरिति तच्छ्रुत्यर्थवर्णनमशक्यम् ॥

---

## प्राणाधिकरणम् ।

पूर्वाधिकरणन्यायातिदेशोऽत्र भाष्यद्वयरीत्यापि । अधिका शङ्का वर्णिता शांकरभाष्ये 'मुख्येऽपि प्राणे (वाक्यशेषश्रुत) भूतसंवेशनोद्गमनस्य दर्शनात् । एवं ह्याम्नायते, 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः स यदा प्रबुध्यते प्राणादेव पुनर्जायन्ते' इति । प्रत्यक्षं चैतत् स्वापकाले प्राणवृत्तावपरिलुप्यमानायामिन्द्रियवृत्तयः परिलुप्यन्तीति । प्रबोधकाले च प्रादुर्भवन्तीति" इति । श्रीभाष्ये च 'कृत्स्नस्य भूतजातस्य प्राणाधीनस्थिति-

प्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति" इति । प्रसिद्धाकाशे जगदुत्पत्तेरप्रत्यक्षत्वात् आकाशशब्दे रूढिभङ्गो न्याय्यः । इह तु प्राणे सर्वेषामपि पुरुषाणां प्राणायत्तप्रवृत्तिकत्वस्योपलंभादस्माकं अनुकूललिंगमस्ति, तदेव युष्माकं प्रतिकूललिंगं, तेनानुकूललिंगसध्रीची-प्राणरूढिशक्तिरभञ्जनीयेति' इति चिन्तामणिः । श्रीशांकरभाष्योक्त-प्रत्यक्षोपलंभबलं तत्रापि प्रदर्शितम् । 'अत एव' इत्यस्य पूर्वोक्ततल्लिंगा-दिति हेतोरेवेत्यर्थः । 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभि-संविशन्ति, प्राणमभ्युज्जिहते' इति वाक्यशेषः । 'इह सेन्द्रियाणां स-शरीराणां च जीवविशिष्टानां भूतानां संवेशनोद्गमनं दृश्यते' इति शांकर-भाष्ये अधिकाशङ्कानिवर्तनम् । शिलाकाष्ठादिषु चेतनस्वरूपे च प्राण-वृत्त्यधीनत्वाभावात्' इति श्रीभाष्ये तन्निवर्तनम् । 'प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते' इति श्रीभाष्यम् । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलकारणं परं ब्रह्म' इति च । 'प्रसिद्धिस्तु बहुभवनरूपेक्षणानवधिकातिशयानन्दजीवानन्दहेतुत्वविज्ञानमयविलक्षणत्व-निखिलभुवनभयाभयहेतुत्वसर्वलोकसर्वकामेशत्वसर्वपाप्मोदयाप्राकृतस्वा-साधारणदिव्यविशिष्टस्य रविकरविकसितपुण्डरीकनयनस्य सर्वज्ञस्य सत्य-संकल्पस्य करणाधिपाधिपस्यैव निखिलजगदेककारणत्वादिति स एव आकाशप्राणशब्दाभ्यां जगत्कारणत्वेनाभिधीयते इति निर्णयो युक्त एव, इति वेदान्तसारे सूत्राणां ब्रह्मगुणग्रथकसूत्रत्वं प्रदर्शितम् । 'तल्लिंगात्' इति सूत्रहेतुपदस्य 'सर्वाणि ह वा इमानि भूतानि' इति सर्वकारणत्वस्य प्रसिद्धवन्निर्देशादेव हेतोः, प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिंगात्' इति वेदान्तदीपे भावितार्थः । 'को ह्येवान्या-त्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्' इति श्रुत्युक्तरीत्या पूर्वाधिकरणसूचितात् सर्वत्र प्रकाशमानात् आनन्दरूपाद्ब्रह्मण एव सर्वस्य प्राणः, 'प्राणनं' इत्यर्थो ध्वन्यते । अत एव पूर्वोक्ताकाशानन्दादेव सर्वेषां प्राणाः । पूर्वोक्तः आकाश आनन्दयितेव विश्वप्राणनः । यः

आकाशः आनन्दः स एव प्राणः । 'केन प्राणः प्रथमः प्रैतियुक्तः' इति केनोपनिषत्प्रश्नस्य 'प्राणस्य प्राणं' इत्युत्तरं दत्तम् । प्राणस्य प्राणभूतो भगवान् । 'पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ... ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवांभसा'। प्राणनादिचेष्टानां न जडप्राणाधीनत्वं, किन्तु प्राणानामपि प्राणभूतब्रह्माधीनत्वम् । 'भस्त्राणि किं न श्वसन्ति' इति शुकः पृच्छति । यद्यानन्दमयं ब्रह्म सर्वत्रानन्दरूपत्वेन प्रकाशेत साधकाय तदैव सः प्राणितीति वक्तुं शक्यम् । आकाशादानन्दादेव प्राणलाभः, इतरथा निष्प्राणतुल्यत्वमेवेत्यपि ध्वन्यते । सर्वेषूच्छ्वासनिःश्वासेषु ब्रह्मानुग्रहेणैवास्मत्प्राणनमित्यनुभवः सततमावर्तनीय इति निपुणं ध्वनिमर्यादयोपदिदिक्षितम् । 'मम प्राणा हि पाण्डवाः' इति भगवान् । अस्माकं प्राणाः भगवान् इत्यस्माभिः भगवतिप्रीतिरभ्यसनीया । स चास्माकमत्यर्थप्रियः प्राणेभ्योऽपि गरीयानिति भावनीयम् । 'प्राणस्य प्राणम्' इति श्रुतिः स्पष्टं ब्रह्म बोधयतीत्यस्मिन्नधिकरणे भाषितं शांकरभाष्ये ॥

प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं
श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद्व्योमवद्बाधनीयम् ।
तन्न, प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादात्
आकाशोक्तेरिवोक्तेर्भगवति निखिलप्राणनस्यापि दृष्टेः ॥

सर्वेषां प्राणिनां शरीरेन्द्रियादीनि प्राणायत्तस्थितिकानि । प्राणे सति सन्ति, तस्मिन्नसति न सन्ति इत्यन्वयव्यतिरेकौ दृश्येते । प्रत्यक्षोपलम्भबलसहकृता प्राणस्य कारणत्वश्रुतिः न रूढ्यर्थभङ्गार्हा । हीति प्रसिद्धिः । इह विदितं – सर्वलोकविदितम् । प्रत्यक्षमिति श्रीशांकरभाष्योक्तं भाष्यम् । रूढिशक्त्या श्रुत्युक्तं अनेन सार्वत्रिकप्रत्यक्षबलेन सुदृढं दृढतरं भवति । इति — इत्यधिकहेतोः । न तत् व्योमवत् (आकाशवत्) बाधनीयं, किन्तु वाक्यशेषगतलिंगस्य प्राण-

कारणत्वसाधकत्वात् दृढीकरणीयमिति भावः । न बाधनीयं, किन्तु सुदृढं साधनीयं साधयितुमर्हम् । तत्र — काष्ठादिषु निष्प्राणेषु महिमहतेः — स्वाधीनत्वरूपमहिमराहित्येन । काष्ठं शुष्कं जीवापेतम् । वृक्षः सप्राण एव । तस्माद्विच्छिन्नः शुष्ककाष्ठः प्राणरहित एव । अतः काष्ठोपादानं क्रियते । 'पूर्ववच्चानुवादात्' तल्लिंगादिति पूर्वाधिकरणे 'सर्वाणि ह्वा इमानि' इति पुरोवादापेक्षानुवादत्वं, तद्वदिहापि पूर्वप्रसिद्धानुवाद्येव वाक्यम् । भगवति यथा आकाशशब्दपाठः 'यदेष आकाश आनन्दो न स्यात्', 'परमे व्योमन्' इत्यादौ, तथा भगवति प्राणशब्दप्रयोगोऽस्त्येव । ब्रह्मणि आकाशतत्समानार्थकखव्योमपदानां प्रयोगः प्रदर्शितः शांकरभाष्ये । प्राणनरूपयोगार्थस्यानवच्छिन्नत्वरूपपौष्कल्यं ब्रह्मण्येव दृश्यते इति प्रदर्श्यते, 'निखिलप्राणनस्य हरेः' इति । 'सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनः' इति पादार्थसंग्रहश्लोके अत्र निखिलप्राणनमित्युक्तं विव्रियते । 'श्रुतौ 'यदेष आकाश आनन्दो न स्यात्', 'दहरोऽस्मिन्नन्तराकाशः' इत्यादिषु भगवद्विषये आकाशशब्दप्रयोगवत्, 'स प्राणस्य प्राणः', 'प्राणस्य प्राणः', 'अमृतस्य प्राणं' इत्यादिषु प्राणशब्दस्यापि भगवति प्रयोगदर्शनात्, प्राणशब्दप्रवृत्तिनिमित्तस्य निखिलप्राणिप्राणनहेतुत्वस्य, 'को ह्येवान्यात्कः प्राण्यात्' इत्यादिषु प्रतिपादनाच्च' इति पदयोजनोक्तं भाव्यम् ॥

---

## अथ ज्योतिरधिकरणम् ।

प्राणस्य प्राणो ब्रह्म । ज्योतिषां ज्योतिश्च तत् । प्राणानां प्राणनं ब्रह्म । आदित्यादिज्योतिषां भासकं तत् । जीवस्य प्राणनं संसारमण्डलातीतत्रिपान्नित्यविभूतिप्राप्त्या, अनुत्तमोत्तमलोके दीप्यमानेन ब्रह्मणाविभागं लब्ध्वा तेन सह शाश्वतानन्दकात्स्न्यानुभव एव । तदभावे 'असन्नेव स भवेत्' । तस्यासत्वं निष्प्राणत्वं च मन्येत साधुभिर्ब्रह्मविद्भिः ब्रह्मणा च । ज्योतिर्मयानन्दमयनित्यविभूतिमत्वं परायणभूतस्यानन्दमयब्रह्मणोऽत्रोपदिश्यते । उपदेशशब्दोऽस्मिन् ज्योतिरधिकरणे

चरमसूत्र प्रयुज्यते इत्यवधेयम् । चेतनानां चेतनं, सर्वात्मनः प्रति अंशिनं "य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमयति" इति मुक्तात्मनामप्यन्तरवस्थितं परमात्मानंप्रति शेषत्वमेव परमात्मांशभूतानां मुक्तचेतनानाम् । यद्यपि शेषत्वं स्वाभाविकमस्ति, तथापि कान्तावत् पुत्रवच्च ब्रह्मणोऽत्यर्थप्रियत्वात्, "ज्ञानीत्वात्मैव मे मतं' इति भगवन्मत्या ज्ञानिनां तदात्मतुल्यत्वात्, प्राणवत् तत्प्रियतमत्वात् परमोदारेण प्रियैकस्वभावेन भगवता स्वानन्दसाम्यं नित्यमनुगृह्यते तेभ्यः । जगद्व्यापारादिधुरं स्वयं वहन् पुत्रवत्पत्नीवदात्मवच्च प्रियतमेभ्यस्तेभ्यः स्वानन्दकार्त्स्न्यं सदा ददाति । अकर्मवश्यत्वात् ते स्वराज इव भवन्ति । स्वप्रियतमब्रह्मानन्याधिपतयो भवन्ति । प्रियतमस्य सर्वेश्वरस्य तस्याधिपत्यं परमप्रियमेव तेषाम् । तेन च भोगवृद्धिरेव न ह्रासः । जगद्व्यापारनिर्वहणाधिकाराद्य कोऽपि लोभोऽधिकः । इदं व्यञ्जितं वेदान्तदीपे "जगन्नियमनरूपधुरावर्जं, "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता", 'श्रोत्रियस्य चाकामहतस्य" इत्यनवधिकानन्दातिशयानन्दब्रह्मानुभवे मुक्तस्य साम्यम्" इति वाक्ये धुराशब्दप्रयोगेन । जन्मादिलक्षणविशिष्टस्य ब्रह्मणो लीलामात्रं विश्वधुरानिर्वहणम् । नाऽऽयासलेशावहम् । तस्यैव तादृशविश्वसारः आयासलेशरहिता केवललीलाभवेत् । स्वांशिनि स्वात्मनि भोगकार्त्स्न्यनित्यप्रदे अत्यर्थप्रिये ब्रह्मणि उपकारस्मृतिः पूज्यताबुद्धिश्च सततं भवेत् मुक्तानामपि । "भूःपादौ यस्य' इति स्मर्यते । "पद्भ्यां पृथिवी' इति मुण्डकश्रुतौ पद्भ्यामित्यस्य पादावित्यर्थः आनन्दगिर्याद्युक्तः । यथा भूम्यादिसंसारविभूतिः ब्रह्मणः पादः तथा अनुत्तमलोकभूतनित्यानन्दविभूतिरपि तत्पाद इति शेषत्वरसिकानां मुक्तानामभिमतिः । उभयविभूतिविशिष्टत्वं ब्रह्मणोऽत्रोपदिश्यते । उभयविभूतिनायकत्वं च । अत्र मुक्तानुभाव्यनित्यविभूतौ तमसोऽस्मात्संसारमण्डलात्परस्यां देदीप्यते ज्योतिषां ज्योतिरानन्दमयं ब्रह्म । तस्याज्ञा तत्राऽप्रतिहताऽस्ति । न तदाज्ञायास्तत्रोल्लंघकः कोऽपि भवेत् ।

चेतद्विभूतिः सर्वमुक्त्या नित्यविभूतिवदानन्दपूर्णाज्योतिष्मती भवेत् तदा, अवरोपितो भवेत् ब्रह्मणः सर्वमोक्षणभारः । संसारसंसारभेदेन विभूतिभेदो मास्तु, सर्वे सर्वान्कामान्सहब्रह्मणा अश्नुवन्तु इति करुणामयस्य सूत्रकारस्य मांगलिकः आशयोऽत्र व्यज्यते । 'तमसो मा ज्योतिर्गमय' इति श्रौतीप्रार्थनाभाव्या । गायन्तं त्रायते इति गायत्रीशब्दव्युत्पत्तिः । गायः प्राणः । तं त्रायते इति च तद्व्युत्पत्तिः । आत्मत्राणकरी गायत्री । गायत्रीवत् ब्रह्म आत्मनां मोक्षदानेन प्राणत्राणं करोति । 'संसाराग्निविदीपनव्यपगतप्राणात्मसंजीविनीं पाराशर्यवचस्सुधां' इति श्रीभाष्यद्वितीयश्लोको भाव्यः । ब्रह्मणोऽपारवात्सल्यं पुनःपुनस्सूच्यते सूत्रकृता । उच्छ्वासनिःश्वासानां तदधीनत्वं सूचितं पूर्वाधिकरणे "अत एव प्राणः" इति सूत्राक्षरैः । अत्र ईश्वर एव वैश्वानराग्निरूपेण प्राणिनामुदरान्तरवस्थाय प्राणापानसमायुक्तः चतुर्विधमन्नमहर्निशमनिद्रः सततं पचति ।" इति सूचनेन तस्य निरतिशयाकरुणाप्रीतिश्च प्रदर्श्यते । "यदतो दिवः परो ज्योतिर्दीप्यते अनुत्तमेषूत्तमेषु लोकेषु तदेवेदं त्वद्देहमाश्रित्यत्वदुदरान्तर्जाठराग्निरूपेणस्थित्वात्वद्भुक्तमन्नं सततं त्वदविदिततयापक्तिं कृत्वा त्वां पुष्णाति" इत्युपदिश्यते । नित्यत्रिपाद्विभूतिनायक आनन्दघनः सर्वेश्वरः काष्ठागतवात्सल्येन त्वत्किंकर इव पचनकैंकर्यं करोति इति सूत्रकारस्य विस्मयः । मातृवद्वात्सल्यमयस्य तस्य शेषित्वे को वा सासूयो भवेत् । दिवः परतो दीप्यमान ज्योतिरेवत्वदुदरान्तर्ज्योतिष्ट्वेनावतिष्ठते । अनुत्तमोत्तमलोके त्रिपाद्विभूतौ दिवि सर्वे नित्यमुक्ताः विजिघत्साः अपिपासाः अतस्तत्र ईश्वराकरुणाविष्करणस्यानवकाशः । अत्रैव क्षुत्पिपासार्दितसर्वसंसारिनिवासभूतप्राकृतलोके तस्यावतारः । मातापितृसहस्रेभ्योऽपि वत्सलतरं ब्रह्म । गीतं च पञ्चदशाध्याये भगवता "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति । "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां, सोऽश्नुते परमे व्योमन् सर्वान्कामान्" इति आचितमानन्दमयविद्यायाम् । तत्रोक्तं परमं व्योम

अनुत्तमा उत्तमश्लोकाः यत्र परमात्मज्योतिर्दीप्यते इत्यत्र प्रदर्श्यते । अनन्तराधिकरणे भगवानेवास्मान् साधु कर्म कारयित्वा तत्रोन्निनीषते, नयति चेति सूच्यते । 'यत्' इति यच्छब्देन "एतावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति पुरुषसूक्तपठितत्वेन प्रसिद्धपूर्वैवाचयपठिता प्रसिद्धिर्द्योत्यते । 'पुंसूक्तं सर्ववेदप्रपठनमहितं यत्परत्वे कृतानां तस्यैव श्रीपतित्वं विशदमभिदधे उत्तरत्रानुवाके' इति तत्त्वमुक्ताकलापगीतं भाव्यम् । 'ह्रीश्चते लक्ष्मीश्च पत्न्यौ' इति तस्य लक्ष्मीभूमिपतित्वं प्रसिद्धम् । 'त्रिपादस्यामृतं दिवि' इति श्रुतिपठितं पादशब्दं विहाय किमर्थं चरणशब्दं प्रयुङ्क्ते सूत्रकारः' इत्याक्षिप्यते द्वैतग्रन्थेषु । एतद्विषये उक्तमस्माभिः सूत्रानुगुण्यसिद्धिविमर्शे 'पादशब्दः समांशमात्रे प्रसिद्धः । समासमभेदं विहायांशमात्रे प्रसिद्धः चरणशब्दः । 'पादोऽस्ये' ति मन्त्रवर्णस्थपादशब्दस्यांशमात्रे तात्पर्यमिति सूत्रकारहृदयम् । इदं च स्पष्टीकृतं सूत्रकारेण 'मन्त्रवर्णात्' इत्यंशाधिकरणसूत्रेण । श्रुतिस्थपादशब्दस्यांशमात्रार्थकत्वं स्पष्टीक्रियते अत्र चरणशब्दपठनेन । श्रीतारानाथीये वाचस्पत्ये चरणशब्दार्थवर्णने उक्तं 'अंशमात्रे यथा ज्योतिश्चरणाभिधानात् इति' इति । त्रिपाद्विभूतिस्थानां मुक्तानामेकपाद्विभूतिस्थसंसारिणाश्चाविशेषेण ब्रह्मचरणत्वसूचनेन 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' इति सर्वेषां भगवच्छेषत्वं सूच्यते । 'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वं' इति गायन्तो भगवत्पादश्चेममेवरसंस्वानुभावारूढत्वेन सूचयन्ति । अनन्तरसूत्रेऽपि गायत्रीशब्दमपठित्वा छन्दः शब्दं पठति सूत्रकारः । 'तथा हि दर्शनं' इति सूत्रखण्डे छन्दोऽन्तरभूतविराट्छन्दसो ग्रहणमिष्यते दृष्टान्तत्वेन । छन्दोमात्रवाचिशब्दपठने 'तथा हि' इति विराट्छन्दःप्रदर्शनं सुकरं भवेत् । शब्दब्रह्मणि, सर्वप्रिया गायत्री । परब्रह्मणि गायत्रीसादृश्यानुसन्धानं सर्वेषां प्रियं स्यात् । गायत्रीमन्त्रप्रतिपाद्यः सावित्रपुरुषः उपपादितः

8

अन्तरधिकरणे । अत्र गायत्र्या एव परमपुरुषसाहचर्यमुपपाद्यते । शास्त्रान्ते च 'प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः' इति सूत्रे 'मनसस्पतिः सूर्यमण्डलान्तस्स्थः परमात्मा 'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्' इति श्रुतेः' इति रत्नप्रभोक्तिर्भाव्या । 'बहुभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिः विनिश्चितैः', 'तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः' 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा', 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः' इत्यादिप्रमाणवचनानुसारेण नारायणध्यानस्य सदा कर्तव्यत्वमेव कृत्स्नेनापि ब्रह्मसूत्रशास्त्रेणोपदिश्यते । पूर्ववाक्ये पादोऽस्यविश्वाभूतमन्त्रस्थपादशब्दोंऽशार्थकः । तत्रैव 'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च' इत्यादिवाक्योक्ते भूतादिपादचत्त्वे, पादशब्दस्य नांशार्थकत्वम् । 'भूतादिपादोपपत्तेश्चैवं' इति तदनुवादकसूत्रे पादशब्दो नांशार्थकः । तत्र पादशब्दस्य अंशभिन्नप्राण्यङ्गपादरूपार्थान्तरे प्रयोक्ष्यमाणत्वात् अंशार्थकपादशब्दघटितमन्त्रप्रत्यभिज्ञापकप्रथमसूत्रे पादशब्दं न प्रयुंक्ते सूत्रकारः । "आकाशो ह्येवैतेभ्यो ज्यायान् आकाशः परायणम्" इति पठितमाकाशवाक्ये । सर्वभूतेभ्यो ज्यायस्त्वमुक्तं तत्र । अत्र "पादोऽस्य विश्वा भूतानि", ततो ज्यायांश्च पूरुषः" इत्यादिना तच्चारु विव्रियते । "अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नं एकांशेन स्थितो जगत्" इति भगवता इदं चारु उपबृंहितम् । अनुत्तमोत्तमलोकभूतत्रिपादमृतविभूतौ सदा देदीप्यमानानन्दस्य ज्योतिषः परायणत्वरूपपरमप्राप्यत्वमत्रोपपाद्यते । तस्य परायणस्यानन्दत्वाजरत्वामृतत्वलोकाधिपतित्वसर्वेशत्वादिकमनन्तराधिकरणविषयवाक्ये पठ्यते । भगवतस्तत्र स्वप्रियाणामुक्तिनीपा च निगद्यते । अन्तराकाशः, प्राणेऽप्यतः प्राणः, अन्तर्ज्योतिः, आत्मस्वन्तर्यामितया वर्तमानः परमात्मा,

तस्यैव सर्वत्र सर्वान्तरत्वेनावस्थितिप्रसिद्धिः । स्पष्टमत्र विषयवाक्ये उभयविभूतिविशिष्टत्वं ब्रह्मणः । नात्र निर्विशेषब्रह्मणो गन्धोऽपि । "अत्र परमेव ब्रह्म ज्योतिश्शब्दमिति सिद्धम्" इति शांकरभाष्यनिगमनवाक्येन परं ब्रह्मैवास्मिन् ज्योतिर्वाक्ये प्रतिपाद्यते इति स्पष्टयति । भूतादिपादवत् त्रिपादमृतविभूतौ देदीप्यमानं विश्वज्योतिः ब्रह्म । उभयविभूतिनायको ब्रह्म यस्यांशे कृत्स्नोऽपि प्रपञ्चः। मुक्तनित्यानन्दविभूतिरपि तदंशः । 'तावानस्य महिमा' इति महिमवदेव ब्रह्म निरूप्यते । अनया हि ऋचा स्वरसेन ब्रह्मैवाभिधीयते, "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' इति सर्वात्मत्वोपपत्तेः । पुरुषसूक्तेऽपीयमुक्तब्रह्मपरतयैव समाम्नायते । स्मृतिश्च ब्रह्मण एवंरूपतां दर्शयति 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति" इति शांकरभाष्यमस्मदिष्टमेव कार्त्स्न्येन । उभयविभूतिविशिष्टैकब्रह्मानुभव एव विशिष्टाद्वैतदर्शनम् । तदेवानन्तराधिकरणवक्ष्यमाणा शास्त्रदृष्टिः । अत्र विभूतिद्वयस्य ब्रह्मांशत्वं निगद्यते, निर्णीयते च । तेन च मिथ्यात्वाभिमानो निष्करुणं निरस्यते ॥

> नोक्तिं व्याहन्ति लिंगं किमपि भवति तु ख्याततत्त्वानुकूलं
> शब्दश्चानन्यनिष्ठः श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः ।
> विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिंगमित्याक्षिपन्तं
> रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या ॥

एतदवान्तरपेटिकाघटकाधिकरणद्वयविषयोऽयं श्लोकः । न केवलं श्रुत्या पूर्वपक्षः । किन्तु अनुकूललिंगबलेनापि । "ज्योतिः' 'दीप्यते' इति कार्यज्योतिष्प्रसिद्धश्रुती, कौक्षेयज्योतिरैक्यलिंगं, स्ववाक्ये ब्रह्मलिंगाभावः इत्यादिकं पूर्वपक्षबीजम् । 'नोक्तिं व्याहन्ति लिंगं किमपि' 'यथा पूर्वाधिकरणयोः सर्वकारणत्वादिकं लिंगं आकाशप्राणरूपविशेषोक्तिं निरुणद्धि तथोत्तरयोरधिकरणयोः किमपि लिंगं विशेषोक्तिं न निरुणद्धि ।" इति पदयोजना । 'लिंगं किमपि भवति तु ख्याततत्त्वानु-

कूलं' 'पूर्वपक्ष्युक्तप्रसिद्धज्योतिरिन्द्रयोरनुकूलं कौक्षेयज्योतिरैक्यादेकं लिंगमप्यस्ति' इति पदयोजना । 'लिंगं किमपि' इति मध्यनिवेशितं पूर्वेणाप्यन्वेति । ज्योतिरधिकरणे देहलीदीपज्योतिर्न्यायावलंबनं रस्यम् । 'शब्दश्चानन्यनिष्ठः श्रुतः' ज्योतिः दीप्यते इन्द्रः इति विशेषशब्दाः । 'परो ज्योतिराद्युक्तिवेद्यो न' 'ज्योतिरित्युक्तिवेद्यः परो न' इति पूर्वपक्षिवाक्यम् । यस्मिन् वाक्ये 'परो ज्योतिर्दीप्यते' इति श्रुत्या पठ्यते, तत्र ज्योतिषः प्रसिद्धनारायणपरब्रह्मपरत्वं प्रतिषिध्यते पूर्वपक्षिणा । 'कुतोऽयमग्निः' इति श्रुतिनिन्दिताग्निरूपकार्यज्योतिषः परज्योतिष्ट्वं चाभिमन्यते इति कथञ्चिद्वैचित्र्यप्रदर्शनरसः । 'परो ज्योतिर्दीप्यते' इति श्रुतिः । 'अत्र न परो ज्योतिर्वेद्यः' इति पूर्वपक्षी । 'नारायण परो ज्योति....... तत्त्वं नारायणः परः' इति पुरुषसूक्तोक्तज्योतिषो दीपनं वक्ति श्रुतिः । 'कार्यज्योतीरूपख्याततत्त्वानुकूलमिदं वाक्यमिति पूर्वपक्षी । 'तत्त्वं नारायणः परः' इति प्रख्याततत्त्वस्य नारायणपरज्योतिषो देदीप्यमानत्वमभिप्रैति श्रुतिः इति रसो व्यज्यते श्लोकपदैः । विश्वोत्पत्त्याद्युक्त्यभावेऽप्यवगतमिह तल्लिंगमित्याक्षिपन्तम्" । नेदं कारणवाक्यम् । नात्र जगत्कारणत्वमुच्यते कस्यचित्तत्त्वस्य । जन्मादिलक्षणासंभवव्यवच्छेदप्रकरणे नैवाकारणवाक्यविचारस्य संगतिः, विश्वतो दीप्तिरूपधर्मो भवतु कार्यज्योतिषो धर्मः, तेन का क्षतिः ब्रह्मणः जन्मादिकारणत्वस्येति यद्याक्षिप्येत, तत्र वक्ति पूर्वपक्षी, यद्यप्यस्मिन्वाक्ये विश्वोत्पत्त्यादिकारणत्वं नोच्यते, तादृशजगत्कारणत्वव्याप्तमवभासाद्यात्मकं लिंगमवगतं, अतः कारणत्वसमव्याप्तनिरतिशयदीप्तिरूपलिंगश्रवणात्, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतिभिर्जगत्कारणस्य निरतिशयदीप्यमानज्योतिष्ट्वश्रवणात्, अत्र श्रुतस्य ज्योतिषः कार्याग्न्यादिज्योतिष्ट्वे, तस्य जगत्कारणत्वं सिध्येदिति पूर्वपक्ष्यभिमानः । अनन्तराधिकरणे इन्द्रस्य हिततममोक्षार्थोपास्यत्वं श्राव्यते । 'कारणं तु ध्येयः' इति श्रुत्या कारणस्यैव तत्संभवः इत्यभिमानः । 'इत्याक्षिपन्तं रुन्धे'

ब्रह्मकारणवादं निरुन्धन् निरुध्यते द्वाभ्यामधिकरणाभ्याम्। 'तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या'। अत्र कौक्षेयज्योतिरैक्योक्त्या अग्निलिंगस्यानन्यथासिद्धेः ब्रह्मणः तच्छरीरविशिष्टत्वग्रहणेनास्य वाक्यस्य ब्रह्मणि समन्वयः क्रियते। 'भेदव्यपदेशाच्चान्यः' इति पूर्वोदाहृतान्तर्यामिब्राह्मणवाक्येनाऽऽत्मब्रह्मशरीरत्वं ज्ञापितम्। 'परविद्यासु जीवोक्तिः निरुक्त्यादेः पराश्रया। तल्लिंगानन्यथासिद्धौ तद्विशिष्टावलंबिनी'। जीवपदमचिदुपलक्षकम्। आकाशप्राणवाक्ययोर्नाकाशप्राणयोरनन्यथासिद्धलिंगं श्रूयते। अतस्तत्र ऐन्द्रीन्यायेनाकाशप्राणपदयो रूढिं भंक्त्वा योगार्थनिरुक्त्या, योगार्थस्य ब्रह्मणि पौष्कल्यात् तत्पदयोर्ब्रह्मपरत्वं वर्ण्यते। ज्योतिरिन्द्रवाक्ययोरग्नीन्द्राद्यनन्यथासिद्धलिंगदर्शनात् तच्छरीरब्रह्मपरत्वं वर्ण्यते। 'चिदचिदित्यत्र न क्रमो विवक्षितः। अत्र तच्छब्देन पूर्वार्द्धोपात्तज्योतिराद्युक्तिवेद्यो गृह्यते। ज्योतिश्शब्दप्रकृतिभूतद्युतधात्वर्थस्य दीप्तिरूपस्य, इन्द्रशब्दप्रकृतिभूतेदिधात्वर्थस्य परमैश्वर्याख्यस्य चोचितः—अनुगुणः, अर्थानुगुण्येन अचिच्चिद्वर्गेति योज्यम्। यः अचिद्वह्निरूपः, यश्चिदिन्द्ररूपश्च तयोर्वर्गः—समूहः, ज्योतिषां स्वतो बहुत्वेन कल्पभेदसिद्धेन्द्रव्यक्तिबहुत्वेन च वर्गसिद्धिः, तस्य वैशिष्ट्यं शरीरशरीरिभावेन तदाश्रितत्वं, तस्य युक्त्या, युक्तिर्योगः संगतिः, तया तत्प्रदर्शनेन' इति पदयोजना। 'तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या' कारणावस्थ चिदचिद्वर्गविशिष्टत्वं जगत्कारणस्य ब्रह्मणः इति तत्त्वस्य प्रतिपादकं शास्त्रमिदम्। एतत्तत्त्वसततताभ्यसनेनैतद्विशिष्टैकपरमकारणतत्त्वस्य दर्शनमेतच्छास्त्राभिमता शास्त्रदृष्टिः। अस्मिन् ज्योतिर्वाक्ये पूर्ववाक्येन सहालोडिते कृत्स्नचिदचिद्वर्गवैशिष्ट्यं कण्ठरवेण पठितं दृश्यते। संसारिणो नित्या मुक्ताश्च चिद्वर्गाः। प्राकृतविभूतिः प्राकृतलोकाः, अप्राकृतदिव्यानुत्तमोत्तमलोकाश्चाचिद्वर्गाः। ईदृशचिदचिद्वर्गोभयविशिष्टत्वं ब्रह्मणो ज्योतिर्वाक्ये प्रातर्दनवाक्ये च दृश्यते। 'भूतादिपादोपपत्तेश्चैवं' इति सूत्रं 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतिश्च चिदचिद्वर्गोभयविभूति-

9

विशिष्टत्वं ब्रह्मणस्सूचयतः । 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा अनन्दोऽजरोऽमृतः' इति प्रातर्दनवाक्ये ब्रह्मणः चिदचिद्वर्गवैशिष्ट्यं तत्सर्वाश्रयत्वं, अपृथक्सिद्धिरूपसंबन्धः इत्यादिकं स्पष्टीक्रियते । 'शास्त्रदृष्ट्या' इति सूत्रपदेन ब्रह्मैकात्म्यप्रत्ययसारा शास्त्रदृष्टिः कथ्यते । इदं च सूच्यते 'चिदचिद्वर्गवैशिष्ट्ययुक्त्या' इति । चिदचिद्विशिष्टत्वेन ब्रह्मोपासनं कथयिष्यमाणमपि सूच्यते । रथनाभ्यरदृष्टान्तश्रुतिवाक्यमुदाहृत्य 'तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूते परमात्मन्येवोपपद्यते' इति 'अध्यात्मसंबन्धभूमपदार्थविवरणं श्रीभाष्ये । 'यथा प्रयोग्य आचरणे युक्तः' इति श्रुताविवात्र अरेषु नाभिः अराश्च नाभौ युक्ता इति व्यज्यते ।

कौक्षेयज्योतिरैक्यं कथितमिहपरज्योतिषस्तस्य विश्वो-
पादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु ।
मैवं पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञप्त्यबाधात्
गायत्र्युक्तिस्तु साम्यादपि च निगदितास्तस्य भूतादिपादाः ॥

'अत्राकाशादिषु त्रिष्वधिकरणेषु 'आकाशाद्वायुः वायोरग्निः' इति श्रुत्युक्तक्रमेण पूर्वपक्षोत्थानं समाधानं चेति संगतिः' इति चिन्तामणिः । 'कौक्षेयज्योतिरैक्यं कथितमिहपरज्योतिषः' 'अग्निग्रहणानुकूलं प्रबललिंगं' प्रक्रम एव प्रदर्श्यते । इह 'ज्योतिः' 'दीप्यते' इति श्रुतिद्वयमस्ति, आकाशाधिकरणन्यायेन तस्याभञ्जनं वदति, अनन्यथासिद्धाग्निलिंगसहकृतश्रुतिद्वयावलम्बनेनात्र पूर्वपक्षी । अत्र सिद्धान्ते 'इदं वाव तत् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः' इत्यत्र ज्योतिश्शब्दः अग्निवाचक एव । रूढिमभंक्त्वा जाठराग्निशरीरकपरमात्मनोग्रहणमिष्यते । 'शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशात्' इति वैश्वानराधिकरणसूत्रेण परमात्मनो जाठरवैश्वानराग्निशरीरकतयोपासनं ब्रह्मणः कथितम् । 'पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य

जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात्' इति तत्र श्रीभाष्यम्, 'अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते 'मनोमयः प्राणशरीरो भारूपः' इत्यादिवत्' इति शांकरभाष्यञ्चावधेयम्। 'प्राण-शरीर' इति शांकरभाष्योदाहृतदृष्टान्तश्रुत्या जाठराग्निशरीरविशिष्टत्वे-नोपास्यत्वं प्रदिदर्शयिषितम्। 'तस्य विश्वोपादानत्वं च विद्यान्तर-विदितमतः कारणं वह्निरस्तु'। स्वर्लोकादित्यवाताम्बरसलिलमहीरूप-मूर्धादिक्लृप्तिर्दृश्यते वैश्वानरस्य तद्विद्यायाम्। 'यदतः परः, इत्यत्र यच्छब्देन विद्यान्तरतद्वाक्यप्रसिद्धिर्ग्राह्येति पूर्वपक्षयाशय इव। मैवम्। 'पुंसूक्तवाक्योदितपरपुरुषस्य प्रत्यभिज्ञाप्त्यबाधात्'। यच्छब्दस्य पूर्ववाक्य-पठितपुरुषसूक्तमन्त्रोक्तविभूतिद्वयांशिनः परामर्शित्वमुचितम्। न केवलं पूर्ववाक्योक्त्या संनिकर्षः, सर्ववेदपठितपुरुषसूक्तप्रसिद्ध्यापि तस्य सन्निकर्षः। न केवलं वैश्वानरविद्याप्रसिद्धिः यथा सर्वपक्षे, किन्तु पुंसूक्तप्रसिद्ध्युपपादनेन सर्ववेदप्रसिद्धिरपि। यत् इत्थं सर्ववेदप्रसिद्धं यत् सर्ववाक्यप्रसिद्धञ्च, तस्यैव तन्निकर्षादिक्यम्। यदित्युपक्रमस्थ-पदेन तस्य प्रत्यभिज्ञापनं सिध्यति। 'पादोस्य सर्वा भूतानि, त्रिपाद-स्यामृतं दिवि' इति पूर्ववाक्ये द्युसंबन्धितया निर्दिष्टस्यैव चतुष्पादो ब्रह्मणः 'अथ यदतः परो दिवो ज्योतिः' इत्यत्र प्रत्यभिज्ञानात्, इति वेदान्तदीपे प्रथमसूत्रपठितहेत्वर्थो भाषितः। 'विद्यान्तरविदितं' इति पूर्वपक्षयुक्तविद्यान्तरवैश्वानरवाक्यप्रसिद्धिस्थाने सर्ववेदपठितप्रसिद्धमहिम-वत्पुरुषसूक्तपठितप्रसिद्धिरुदाह्रियते सिद्धान्तिना। 'परपुरुषप्रत्यभिज्ञाप्त्य-बाधात्'। विश्वभूतेभ्यो ज्यायस्त्वमुक्तं पूर्ववाक्यपठितमन्त्रे विभूतिद्वयेन चतुष्पदः पुरुषस्य। यच्छब्दस्य पूर्ववाक्योक्ततत्प्रत्यभिज्ञापनं स्वरसम्। उपक्रमस्थयच्छब्देन तत्प्रत्यभिज्ञापनस्वारस्यबाधनं न न्याय्यम्। पुंसूक्ते श्रुतिशिरसि वीदीप्यते श्रीनिवासज्योतिः। 'गायत्र्युक्तिस्तु साम्यात्' चतुष्पात्त्वसाम्यादेव, न पुनर्गायत्रीस्वरूपत्वात्। 'अस्मिन्खलु वाक्ये गायत्रीशब्दवाच्यस्य परस्य ब्रह्मणः सादृश्येन भूतपृथिवीशरीरहृदयानि

निर्दिश्यन्ते' इति चिन्तामणिः । 'ब्रह्मरूपा गायत्री भूतपृथिवीशरीर-हृदयरूपपादचतुष्टयवत्त्या च चतुष्पदा, गानकर्तृत्वत्राणकर्तृत्वसर्वभूत-प्रतिष्ठात्वसर्वभूतानतिवर्तित्व-सर्वप्राणानतिवर्तित्वसर्वप्राणप्रतिष्ठात्वलक्षण-विधाषट्कयुक्ततया षड्विधा च । अतश्च चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसाम्यात् गायत्र्युक्तिरिति भावः' इति पदयोजना । सैषा चतुष्पदा षड्विधा गायत्री । 'तदेतद् ऋचाऽभ्यनूक्तम्' तावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुत्या एतदृचो गायत्रीत्वमभिहितं स्यात् ॥

॥ इति ज्योतिरधिकरणम् ॥

---

## अथ इन्द्रप्राणाधिकरणम् ।

अत्र सुरनायकेन्द्रशरीरकत्वेन प्राणशरीरकत्वेन अमृतत्वेन च ब्रह्मण उपास्यत्वमुपपाद्यते । ऐकात्म्यप्रत्ययसारतया सर्वत्र सर्वेषा-मात्मनामनात्मनां च सर्वान्तरपरमात्मात्मकत्वदर्शनेन विशिष्टाद्वैतानुभव-रूपशास्त्रदृष्टिरूपपरमरहस्यं च सूच्यते । 'यस्मात् क्षरमतीतोऽहमक्षरा-दपि चोत्तमः । अतोऽस्मिन्लोके वेदे च प्रथितः पुरुषोत्तमः । यो मामेव-मसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥' इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥' इति गीताषोडशे । केवलकर्मठाः इन्द्रं त्रिलोकाधिपतिं स्वयज्ञादिभिः प्राप्यं स्वर्गस्याधिपतिं परमेश्वरं मन्यन्ते । इन्द्राधिष्ठितस्वर्गान्नान्यदस्तीति वेदवादरतानां पुष्पिता वाक् । 'सस्वर्गः सर्वान्प्रत्यविशिष्टत्वात्' इति केवलकर्मठानां विश्वजिन्न्यायः । विकल्पो-ऽविशिष्टफलत्वात्' इति ब्रह्मविदां वेदान्तन्यायः । न मोक्षाद्विशिष्ट-

मुत्कृष्टं फलमिति वेदान्तिनः । 'तमेव विदित्वा अतिमृत्युमेति नान्यः पन्थाः' इति श्रुतिः । फलकामनयैव केवलकर्मठानां कर्माधिकारः । फलत्यागेनैव मुमुक्षूणां कर्मण्यधिकारः । 'स्वर्गाद्यर्थप्रवृत्तिधर्म एव फलवान्, तादृशधर्मबोधकवाक्यानामेव प्रयोजनवत्त्वं, वेदोपरा वेदान्ताः' इति कर्मठाः । अत्र सुरनायकेनेन्द्रेणैव स्वान्तर्यामिस्वशरीरकपरमात्मोपासनमेव मनुष्याणां हिततमम्, स एव स्वाधिकः सर्वलोकपालः स एव लोकाधिपतिः, स एव सर्वेशः, स स्वस्याप्यन्तर्नियन्ता आत्मा इति स्पष्टमुपदिश्यते । एतेन च केवलकर्मठाभिमानो निरस्यते । समन्वयाधिकरणनिर्णयस्य सामञ्जस्यं करबदरसमानं प्रदर्श्यते पादान्ते स्वर्गाधिपतिमुखेन । 'एष लोकपालः' इति वदन् स्वस्य लोकपालत्वप्रसिद्धिर्न न्याय्या, परमात्मन्येव तन्नामान्वर्थं भवेत् इति स्पष्टयति । 'एष लोकाधिपतिः' इति वदति । अधिकः पतिः अधिपतिः । 'एष मे अन्तरात्मा परमात्मैव सर्वलोकाधिपतिः । पूर्वाधिकरणविषयवाक्ये अनुत्तमोत्तमामृतलोकेषु दीप्यमानं परमात्मज्योतिर्वर्णितम् । अत्र तज्ज्योतिषस्तल्लोकाधिपतित्वं सर्वलोकाधिपतित्वं च कथ्यते । 'एष सर्वेशः' इति वदति इन्द्रः । 'इदिपरमैश्वर्ये' इति धातुपाठे । नाहं परमेश्वरः मदधिकः सर्वेशः इदिधात्वर्थपौष्कल्ययुक्तः परमात्मैवेति व्यञ्जयति, स्वस्य परमात्मशेषत्वज्ञानपूर्त्या, विनयं तत्त्वं चावलम्ब्य । 'स मे आत्मेति विद्यात् स मे आत्मेति विद्यात्' इति स्वस्याप्यन्तर्नियन्ता आत्मा सर्वेश्वरः इत्युपदेशमुपसंहरति । नात्र वक्त्रावक्तुस्स्वस्यैवोपास्यत्वेनोपदेशः क्रियते, किन्तु वक्तुः स्वस्य 'स मे आत्मा' इति निर्दिष्टस्वान्तर्याम्यात्मनः एवोपास्यत्वेनोपदेशः क्रियत इति द्वितीयसूत्रेण कथ्यते । 'अधिकः आत्मा अध्यात्मा, अधिकश्चासावात्मा चेति कर्मधारयः । अध्यात्मा परमात्मा' इति महामहोपाध्यायसुदर्शनाचार्याः सूत्रार्थमणिमञ्जर्यां द्वितीयसूत्रव्याख्याने । अस्मद्ग्रन्थेष्वपीत्थं सौत्राध्यात्मशब्दार्थो निरुच्यते । 'परमात्मासाधारणधर्मसंबन्धोऽध्यात्मसंबन्धः' इति श्रीभाष्यम् । परो मा अस्मादिति परमः

10

सर्वाधिकः आत्मा इत्यध्यात्मशब्दार्थः । 'अध्यात्मनित्या विनिवृत्तकामाः' इति गीताश्लोकव्याख्याने 'अध्यात्मनित्याः परमात्मस्वरूपालोचने नित्याः तत्पराः' इति भगवत्पादभाषणमप्यवधेयम् । प्रदीपकृदपि '.वक्तुरात्मनोऽधिकस्य परमात्मनः' इति, सौत्राध्यात्मपदं ऋजुतया व्याख्यातीति प्रमोदस्य काष्ठां प्राप्नुमः । 'न प्राणशब्दो ब्रह्मपरः, वक्तुरिन्द्रस्यात्मनो देवतात्मन एवात्रोपदेशात्. उपदिश्यमानवक्त्रात्माऽभिन्नत्वादिति यावत् इति चेत् इति पश्यति चेद्भवान् तन्नेति वाक्यशेषः । तन्न युक्तं कुतः हि - यस्मात् अध्यात्मसंबन्धभूमा, वक्तुरात्मनोऽधिकस्य परमात्मनो बहुत्र सम्बन्धः अस्मिन् तृतीयाध्याये दृश्यते इति सूत्रार्थः' इति प्रदीपोक्तः स्वरसस्वरसः सूत्रार्थस्सर्वसंमतः । इन्द्रात् उत्कृष्टजीवात् तत्त्वदर्शिनः शास्त्रदृष्टिसंपन्नात् ब्रह्मविदग्रेसरात् . हिततमब्रह्मविद्योपदेष्टुरधिकः परमात्मा उपास्यत्वेन तस्यैव भूयानन्वयः अभिधेयतया सम्बन्धो दृश्यतेऽस्मिन्प्रकरणे इति सूत्रकारः स्पष्टं वक्ति द्वितीयसूत्रेण । नाहं लोकपालः नाहं लोकाधिपतिः नाह सर्वेशः, क्वाहं क्व सर्वेशः, ममाऽन्तरात्मा सः, मदधिक आत्मा सः, मदन्तर्यामी सर्वेशः उपास्यः । 'मृत्युर्यस्योपसेचनं' इति यथा आचार्ययममुखेन ब्रह्मणः 'हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमनेन ममापि विष्णुः" इति यमोक्तावेव यमनियन्तृत्वं स्पष्टीक्रियते, तद्वदिह इन्द्रेण स्वस्मादधिकेश्वरत्वं स्वनियन्तृस्वात्मत्वं परमात्मन उपदिश्यते । नाहं उपास्यः केवलेन्द्रः, किन्तु मच्छरीरी मच्छेषी मदंशी, मे आत्मा परमात्मा इति तस्योपदेशः स्पष्टोऽत्र । "एष ह्येव साधुकर्मकारयति, यमेभ्यो लोकेभ्यः उन्निनीषते" इति, एषलोकाधिपतिरेषलोकेश' इति च सर्वमेतत्परस्मिन् ब्रह्मण्याश्रीयमाणे अनुगन्तुं शक्यते" इति भगवत्पादभाष्यमप्यवधेयम् । 'अनुत्तमोत्तमलोकभूतत्रिपादमृतविभूतिमहमुन्नेयः परमात्मना । त्वामपि स एव तत्रोन्नेतुमर्हति । सर्वान् जीवान् साधुकर्मकारयित्वा तत्रोन्नयनेच्छाभरितः स इति व्यज्यते 'उन्निनीषते' इत्यत्रसना । तदर्थमेवान्तरात्मतया सखित्वेन

मद्धृदयगुहायां वसति, त्वद्धृदये च, सर्वेषां हृदये चेत्यत्रस्पष्टमुपदिश्यते इन्द्रेण। "उपक्रमपरामर्शोपसंहारेषु ब्रह्मलिंगं वर्तते। तत्र प्रथमं हिततमत्वं ब्रह्मलिङ्गमित्यत्र न विशयलेशोऽपि। एवं सर्वपाप्मासंस्पर्शित्वं, अमृतत्वं, सर्वभूतसंवेशनोद्गमनं, 'एतस्मादात्मनः प्राणाः' इति वाक्यावगतसर्वलोककारणत्वं, आनन्दत्वं, अजरत्वामृतत्वे, पुण्यपापसंस्पर्शित्वं सर्वकारयितृत्वं, लोकपालत्वलोकाधिपतित्व सर्वेश्वरत्वानि, 'स मे आत्मे' ति प्रतिपादितविज्ञानात्मान्तर्यामित्वं ब्रह्मण एव चासाधारणं लिङ्गमिति ब्रह्मलिङ्गमादितः आन्तमनुगतं वर्तते" इति प्रदीपोक्तं प्रामाणिकमेव। एतत्सर्वं सगुणब्रह्मणो लिङ्गं, न निर्विशेषनिस्सम्बन्धब्रह्मणः इति स्फुटम्। एतेनात्र निर्विशेषब्रह्मप्रतिपादनाभिमान उत्सार्यते। अध्यात्मशब्दोक्तपरमात्मान्वयलिङ्गभूमाद्वितीयसूत्रेण हेतूकृतः सगुणब्रह्मण्येवानुगतो दृश्यते। परमात्मा मम अन्तर्याम्यात्मा, स सर्वेशः स अधिपतिः, इतीन्द्रः पश्यत्युपदिशति च। अत्र 'स म आत्मेति विद्यात्' इति उपदेशनिगमनवाक्यं शास्त्रदृष्टिपदस्य अन्तर्यामिदृष्टिरित्यर्थमनुगृह्णाति। 'अन्तर्यामिणं दृष्ट्वा' इति सूत्रार्थमञ्जरी। 'स म आत्मेति विद्यात्' इति वाक्यमत्रावर्त्यते। इत्थमेवानन्तराधिकरणविषयशाण्डिल्यविद्यावाक्ये 'एष मे आत्मा अन्तर्हृदये' इति शाण्डिल्येन ब्रह्मविदग्रेसरेणाभ्यस्यते। इत्थं च तदधिकरणस्यैतेनाधिकरणेन स्वरसा संगतिः। तत्र यथा 'एष मे आत्मा' इति उपासकजीवात्मनो ब्रह्मतो भेदः सिद्धान्त्यते कर्मकर्तृव्यपदेशशब्दविशेषस्मृतिसूत्रैः, तथाऽत्रापि 'स म आत्मेति विद्या' दिति आचार्य इन्द्रः प्राप्यब्रह्मणः प्राप्तुर्जीवाद्भेदं, अधिकतां अन्तर्नियन्त्रात्मतां च द्रढयति। न वक्तुर्जीवात्मनः उपास्यतयोपदेशः, किन्तु तदधिकतन्नियन्तुः सर्वेशपरमात्मन इत्यत्र द्वितीयसूत्रम्। तत्र यथा विवक्षितगुणानां उपास्यसगुणब्रह्मणि उपपत्तिः, तथा अत्र प्रदीपेनाप्युक्तानां बहुगुणानां विवक्षित सगुणब्रह्मण्युपपत्तिः प्रतिपाद्यते 'तथा अनुगमात्' इति, 'अध्यात्मसम्बन्धभूमाह्यस्मिन्' इति च। एतयोरधिकरणयोः निर्गुणसगुणभेदेन प्रतिपाद्यभेदकल्पनं

सूत्राक्षरविरुद्धं, विचार्यप्राणविषयवाक्याक्षरस्पष्टविरुद्धश्च । अत्र 'उपासस्व' इति ब्रह्मोपासनमुपदिश्यते । 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्व" इत्युपासनाविधिवाक्यम् । यत्र वेदनमुच्यते तत्रापि उपासनरूपप्रत्ययावृत्तिरेव विधित्सितेत्यावृत्त्यधिकरणप्रदर्शितो न्यायः। अत्र उपासनमेव स्पष्टं शब्दतो विधीयते । नेदमुपासनप्रकरणं, किन्तु स्वगोष्ठीमात्रप्रसिद्धज्ञेयनिर्विशेषप्रकरणमिति वदतां श्रुतिविरोधः सूत्रविरोधश्च स्पष्टः । अद्वैतोक्तसंसर्गासंसर्गखण्डनिर्विशेषधीपक्षस्य अध्यात्मसम्बन्धभूमानं हेतूकुर्वन् सूत्रकार एव प्रथमनिरासकः ॥

उपासात्रैविध्यमत्र श्रुत्या आश्रितमित्यत्र स्पष्टानि तुरीयसूत्राक्षराणि। 'तथा अनुगमात्' इत्यत्र तथा शब्देनापि प्रकारवाचिथाल्प्रत्ययेन प्राणप्रकारत्वेन, इन्द्रप्रकारत्वेन च आनन्दत्वाजरत्वामृतत्वप्रकारेण चात्रोपासनस्य विधानं सूच्यते इति रसोऽनुभाव्यः । तथाशब्दः प्रकारवाचित्वे स्वरसः । प्राणः इति पक्षपदं इन्द्रपदस्याप्युपलक्षकम् । अत्र प्राण इन्द्रो वा उपास्यः स्यादिति पूर्वपक्षी । प्राणः इन्द्रश्चात्र न मुख्यतयोपास्यौ, किन्तु परमात्मैव प्राणप्रकारवत्त्वेनेन्द्रप्रकारवत्त्वेन स्वस्वरूपेण चोपास्यतया प्रतिपाद्यते इति सिद्धान्तः । 'परमात्मन एव प्राणेन्द्रप्रकारतयानुगमात्' इति हेतुः । यद्यपि प्राणलिंगं इन्द्रलिंगञ्चास्ति, तथापि न तयोरुपास्यत्वमुपदिश्यते, किन्तु तत्प्रकारत्वेन ब्रह्मैवोपास्यमित्युपदिश्यते इति तथाशब्देन सूच्यते इति वर्णनं स्वरसमेव । अत्र व्यञ्जितं स्पष्टीक्रियते चरमसूत्रे 'उपासात्रैविध्यात्' इति । विधाशब्दः प्रकारवाची । तथाशब्दश्च तथैव । प्राणेन्द्रयोरन्यतरस्य पक्षत्वेन ग्रहणं सूत्रकाराभिमतमिति संमतं सर्वभाष्यकाराणाम् । यो यः उपास्यत्वेन पूर्वपक्षिणा शंक्यते, तत्तत्प्रकारेण ब्रह्मोपास्यं, न तत्तद्वस्तुमात्रं स्वरूपेणेति सिद्धान्तिप्रतिवचनं सूच्यते 'तथा' इति प्रथमसूत्रहेतुखण्डेन । 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' इत्यस्मिन्प्रकरणे परमात्मासाधारणलिंगबाहुल्यं दृश्यते इत्येकोऽर्थः । अनेनात्र इन्द्रमुख्यप्राणानन्यथासिद्धासाधारणलिंगानि अल्पशः सन्तीति

सूच्यते । चरमसूत्रे जीवमुख्यप्राणलिंगसद्भावमभ्युपगम्यैव तेषां गतिः प्रदर्श्यते, तदुभयप्रकारत्वेनापि प्रकरणिनो ब्रह्मणः उपासनविधानप्रदर्शनेन। यद्यपीन्द्रमुख्यप्राणयोरनन्यथासिद्धलिंगानि सन्ति, तथापि तेषामल्पीयस्त्वं, लिंगभूमा तु अध्यात्मशब्दितपरमात्मन एव । तदन्वय एवात्र भूयान्, तस्मात्स एवात्र प्रकरणी । इतरौ तु तदुपासने प्रकारतया विधासमर्पणेनान्विताविति सूत्राक्षराणां स्वरसोऽर्थः । नात्र वाक्यभेदशंकायाः अवकाशः । 'तं मामायुरमृतमुपास्स्व' इत्युपासनविधायकवाक्यम् । 'व्यासार्योक्तरीत्या 'तं मामायुरमृत' मिति वाक्ये मामिति जीवविशिष्टतोच्यते । आयुरिति प्राणविशिष्टता । आयुः प्राण इत्यनन्तरमेव श्रवणात् । अमृतमिति स्वेन रूपेणावस्थितिः अत एवमस्मिन्नेव वाक्ये स्वेन रूपेण चिदचिद्विशिष्टतया च त्रिविधोपासनं विधीयते । अतो नोपासनात्रयविधिकृतवाक्यभेद इति द्रष्टव्यं' इति श्रीरंगरामानुजमुनयः कौषीतकिभाष्ये । एवमस्यां विद्यायां त्रैविध्येन ब्रह्मण उपासनं विधीयते इति चरमसूत्रेण सूत्रकारहृदयं स्पष्टीक्रियते । जीवमुख्यप्राणलिंगात् तयोरुपास्यत्वं विहितमिति चेत् ब्रह्म एकमेवात्र त्रिप्रकारतया उपास्यत्वेनोपदिश्यते इति सूत्रकारहृदयम् । एकः प्रकरणी, उपक्रमप्रभृति उपसंहारपर्यन्तं भूयोलिंगान्वयवान् परमात्मा अत्रोपास्यः । तदुपासनायां अनन्यथासिद्धलिंगभाजोरिन्द्रजीवमुख्यप्राणयोः प्रकारसमर्पकत्वमिष्यत इति सौत्रं प्रदर्शनम् । अस्ति भूयिष्ठं प्रयोजनमत्रेन्द्रेणैव स्वशरीरकपरमात्मोपासनोपदेशे । नाहं केवलकर्मठपरमप्राप्यस्वर्गाधिपत्यं कामये, विराग एव मयास्मिन्, सर्वेशांशभूतोऽहं, तदपृथक्सिद्धविशेषणभूतोऽहं, तेन अमृतत्रिपाद्विभूतिभूततल्लोकोन्नयनमेवाहं कांक्षामि इति इन्द्रेणैवोपदेशे कृते केवलकर्मिणां स्वर्गे विरागः, अपुनरावृत्त्यनुत्तमब्रह्मलोकप्राप्तौ रागश्चोत्पद्येयातामिति श्रुत्याशयः सूत्रकाराशयश्च । "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः" इत्याचार्यथमोपदेशरीतिः पूर्वमेवोदाहृता । "यस्य प्राणः शरीरं स खलु हिततमोपास्तिकर्मप्रसक्तः तस्मिन् जीवत्व-

शङ्कां जगदुपजनकेऽसौति शाण्डिल्यविद्या" इति सारावल्युक्तरीत्या "मनोमयः प्राणशरीरः" इत्युपास्यस्य प्राणशरीरत्वेन पठनात् तद्वाक्यस्य जीवपरतया योजनं न्याय्यमित्युपपाद्य, तत्पूर्वाधिकरणेऽस्मिन् प्राणशरीरतया उपपादितमुपास्यमपि जीवः स्यात् न ब्रह्मेत्याक्षेपसंगतिः । तेनाप्यत्र प्राणशरीरत्वमुपास्यप्रकारतयोपपादितमिति निश्चेतुं शक्यम् । गीतापञ्चदशाध्यायोपपादनरीतिमनुसरति सूत्रकृदस्मिन्पादे । तत्र "ऊर्ध्वमूलमधश्शाख" मिति उपक्रमे कृत्स्नस्य संसारवृक्षस्य ऊर्ध्वशब्दाभिधेयपरमात्ममूलत्वमुक्तम् । एतेन "जन्माद्यस्य यतः' इति ब्रह्मलक्षणं संगृहीतं भवति । "ब्रह्म अव्यक्तमायाशक्तिवत्, तन्मूलमस्येति सोऽयं संसारवृक्षः ऊर्ध्वमूलः'. इति शांकरभाष्ये शक्तिविशिष्टब्रह्मणो जगत्कारणत्वमुक्तम् । विशिष्टकारणवाद एव सः । कार्योपयोग्यपृथक्सिद्धविशेषणं शक्तिः । "ऊर्ध्वो विष्णुः, "ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविणं सवर्चसम्" इति श्रीमध्वभाष्यम् । एवं सुविरूढमूलमश्वत्थं असंगशस्त्रेण दृढेन छित्त्वा "ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः" इत्युक्तरीत्या संसारवृक्षच्छेदः सर्वपापहान्या निवर्त्यः इति प्रदर्श्यते । "तमेव चाद्यं पुरुषं प्रपद्येत् यतः प्रवृत्तिः प्रसृतापुराणी' इत्युक्तं संसारवृक्षच्छेदनरूपमोक्षसाधनं जगत्कारणभूताद्यपुरुषस्यैकान्त्येन श्रवणं तस्मिन्निष्ठा इति "तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रेणोच्यते । "अध्यात्मनित्या विनिवृत्तकामाः' इति गीतायां तदेवोच्यते । 'न तद्भासयते सूर्यः', 'यदादित्यगतं तेजो जगद्भासयते अखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति ब्रह्मणो निरतिशयदीप्तिमज्ज्योतिष्ट्वमुच्यते । "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति प्राप्यत्रिपाद्विभूते ज्योतिर्मयत्वं व्यञ्जितं 'धाम' शब्देन । धाम शब्दः स्थानवाची ज्योतिर्वाची च । "तत् धाम तेजोरूपं पदम्" 'तत् धाम परमं विष्णोः मम पदम्" इति भगवत्पादभाष्यम् । ज्योतिरधिकरणविषयवाक्यं, तत्सूत्राणि चेह भाव्यानि । "ममैवांशो जीव-

लोके जीवभूतस्सनातनः" इति जीवानां ब्रह्मांशत्वमुक्तम्। तद्रीत्या 'पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि' इति सर्वेषां चिताम-चितां च ब्रह्मांशत्वं अत्र सूचितम्। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति गीतोक्त-रीत्याऽत्र ज्योतिरधिकरणे कौक्षेयज्योतिश्शरीरकत्वमुक्तं ब्रह्मणः। "सर्वस्य चाहं हृदि सन्निविष्टः, "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतोक्त-रीत्याऽत्र विज्ञानात्मजीवान्तरात्मत्वेन, आदित्यजीवान्तर्यामित्वेन, इन्द्रान्तरात्मत्वेन विश्वशरीरकशारीरात्मत्वेन च प्रदर्शनं कृतम्। "सर्वस्य' इत्यादित्येन्द्रादि सर्वचेतनसंग्रहणम्। "यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्" इति गीतायामारुरुक्षवः साधकाः, आरूढाः योगिनश्चपरमात्मानं स्वात्मन्यवस्थितं पश्यन्तीति ब्रह्मविदां शास्त्रदृष्टिः प्रदर्शिता। इन्द्रः स्वात्मन्यन्तरात्मतयावस्थितं पश्यन् उपदिदेश। "द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षर एव च" इत्यारभ्य सर्वसंसारि-चेतनानां क्षरपुरुषत्वं, मुक्तानामक्षरकूटस्थपुरुषत्वञ्चोक्त्वा, "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रमाविश्य बिभर्त्यव्यय ईश्वरः" इति प्राप्यस्योत्तमपुरुषस्य परमात्मसंज्ञकस्य प्राप्तृमुक्तात्मान्यत्वं, तद्भरण-कर्तृत्वं क्षराक्षरातीतत्वं, क्षराक्षरपुरुषेभ्य उत्तमत्वं पुरुषोत्तमशब्दवाच्यत्वेन लोकवेदप्रसिद्धत्वं चोक्तानि गीतायाम्। "सम आत्मेति विद्यात्", 'एष सर्वेशः' इतीन्द्रेणात्र तदेवोच्यते। अध्यात्मशब्देन सूत्रकारः ब्रह्म-विदाचार्यादधिकस्यान्यस्य परमात्मन उपास्यत्वं प्राप्यत्वं च व्यनक्ति। अनन्तराधिकरणे च कर्मकर्तृव्यपदेशशब्दविशेषस्मृतिसूत्रैरिदं स्पष्टीकरोति। 'स्मृतेश्च' इति सूत्रेण 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इति श्लोकः परामृष्टः। गीतापञ्चदशाध्यायपठितः "सर्वस्य चाहं हृदि संनि-विष्टः' इति श्लोकस्तत्समानार्थः। "यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत'। इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ। एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च

भारत "इत्यध्ययान्तिमश्लोकौ भाव्यौ । इयमेव गुह्यतमशास्त्रदृष्टिः 'इति स्पष्टं भगवद्वचनम् ५। सर्वभावेन क्षराक्षरातीतपुरुषोत्तमस्य सर्वान्तरात्मनः भजनानुभवाभ्यसनादिभिरेतत्तत्त्वस्य दर्शनं संपाद्यम् ।' ज्ञानवान् मां प्रपद्यते । वासुदेवः सर्वमिति ' इति भगवत्प्रपदनभजनप्रकारः उपदिष्टः । तत्र वासुदेवशब्दः 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ' इति निर्वचनार्थग्राहकः । 'सर्वत्र भगवान्वसति सर्वं तस्मिन्वसति ' इति शास्त्रतत्त्वम् । 'सर्वत्र प्रसिद्धोपदेशात् ' इत्यारभ्यानन्तरपादे सर्वत्रान्तरात्मतया वासुदेववासः उपपाद्यते । द्युभ्वादीनां वासस्थान सः ' इत्यनन्तरपादमारभ्य तत्र निर्वचनश्लोकोक्तद्वितीयपादांश उपपाद्यते । मुक्तानां सर्वचेतनानां ब्रह्मांशत्वं स्पष्टं गीतम । सर्वविशिष्टैकवस्तुनो विशेषणभूतानां सर्वचिदचितां ब्रह्मापृथक्सिद्धविशेषणत्वरूपांशत्वम् । स्वप्रकार्यन्तदृष्टिः शास्त्रदृष्टिः । स्वस्य ब्रह्मापृथक्सिद्धविशेषणत्वं ब्रह्मव्यतिरेकेणाभावश्च तत्त्वम् । "शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य, जीवात्मशब्दानां अहंत्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा 'मामेव विजानीहि, 'मामुपास्व ' इति स्वात्मशरीरकपरमात्मानमेवोपास्यत्वेनोपदिदेश । यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन्, 'अह' मिति स्वात्मशरीरकं ब्रह्म निर्दिश्य, तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति "तद्धैतत् " इत्यादिना । यथा च प्रह्लादः 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादिवदति " इति श्रीभाष्यम् । शास्त्रस्था हि वामदेवादयस्तथैव वदन्ति ' इति सारे । 'शास्त्रस्था इति ' पदं 'शास्त्रस्था वा तन्निमित्तत्वात् ' इति सूत्रं कथंचित्स्मारयति । वैदिकशब्दार्थप्रतीत्युपपादनप्रकरणसामान्यात् । वेदान्तशास्त्रिणां ब्रह्मविदां वेदान्तव्युत्पत्तिपूर्वकभापणानुभवादिकं न्याय्यम् । शास्त्रदृष्टिः नाव्युत्पन्नवेदान्तस्य लोकदृष्टिः । शास्त्रदृष्ट्या उपदेशवाक्यं प्रयुज्यते । यथाशास्त्रमेव तद्वचनस्यार्थो ग्राह्यः । सर्वगत्वादनन्तस्य स एवाहमवस्थितः इति

ब्रह्मन्दवाक्ये स एवाहमिति प्रतीतिव्यवहारयोर्निमित्तं अनन्तस्य सर्वगत्व-निश्चयानुभवौ इति स्पष्टीकृतम्। 'सर्वं खल्विदं ब्रह्म॰तज्जलान्' इत्यनन्तराधिकरणविषयवाक्ये इदं स्पष्टीकरिष्यते । सर्वं ब्रह्मेत्यस्य सर्वत्र ब्रह्मात्मतयावस्थितमित्यर्थस्सूच्यते सूत्रकृता 'सर्वत्र' इत्यनन्तरपादारंभे । 'पश्यन्त्यात्मन्यवस्थितं' इत्युदाहृतगीताश्लोकेन इत्थमेव योगिनां दर्शनानुभव इति स्पष्टीकृतम् । 'अवस्थितेरितिकाशकृत्स्नः' इति सूत्रं चेदमेव वक्ति । 'अन्यश्च राजन् स परः स चान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः' इतीदमेव साधूनां शास्त्रदर्शनमिति स्पष्टीकृतम्। 'वासुदेवे प्रविष्टधीः' इतिवत् सर्वात्मनि वासुदेवे स्वाहंबुद्धेर्मज्जने ईदृश अनुभवः। सर्वभावेन भगवतो भजने, वासुदेवः सर्वं इत्यनुभवे संपन्ने, स्वस्यापि वासुदेवान्तर्गतांशत्वात् वासुदेवेऽहंबुद्धिविश्रमः । तस्य मन्वादिसर्वात्मत्वात् स्वाहंबुद्धिपर्यवसानभूमिभूतपरमात्मसामानाधिकरण्यं मन्वादीनाम् । परमात्मान्तः प्रवेशमज्जनादिकं विना न केवलस्य सर्वात्मब्रह्मांशभूतस्वमात्रस्य मन्वादिसामानाधिकरण्यानुभवसंभवः । ब्रह्मणः सर्वात्मकत्वदर्शने स्वस्यापि तदात्मकत्वमनुभूयते । (11)

'अध्यात्मसंबन्धभूमाह्यस्मिन्' इति द्वितीयसूत्रहेतुखण्डस्य बह्वर्थसूचकत्वमिष्यते । वक्तृभूतेन्द्रस्यैवोपास्यत्वोपदेशः क्रियते, तस्य हि महिमा उच्यते त्रिशीर्षत्वाष्ट्रहननादिकर्तुरपि स्वस्य न लोमापि हीयते इति' इति पूर्वपक्षः । सर्वपाप्मोदितत्वरूपमहिमा अस्मिन् इन्द्रे ब्रह्मविद्यासम्बन्धमहिम्नैव । भूमा भूयस्त्वम्, महिमा । अस्मिन्नयं पाप्मराहित्यरूपो महिमा अध्यात्मसंज्ञितैतदधिकपरमात्मसंबन्धहेतुक एव । 'स यावद्धवा इन्द्र एतमात्मानं न विजज्ञे तावदेनमसुरा अभिबभूवुः स यदा विजज्ञेऽथहत्वाऽसुरान् विजित्य सर्वेषां देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय' इत्यनन्तराध्यायान्ते इदं स्पष्टीकृतमुपनिषदा। अस्य त्वाष्ट्रहननादिसामर्थ्यं तत्प्रयुक्तपाप्मविनाशाश्लेषादिमहिमा ब्रह्मविद्यालब्धपरमात्मसम्बन्धविशेषनिमित्तकः । ब्रह्मविद्यामहिमा ब्रह्मसम्बन्धमहिमा । नेन्द्रस्तुतिः किन्तु ब्रह्मसम्बन्धमहिमस्तुतिः ।

ब्रह्मनिष्ठया लब्धब्रह्मानुग्राह्यतासम्बन्धमहिमा । ज्ञानिषु ब्रह्मणः आत्मत्वाभिमानः प्रसिद्धः । तादृशसंबन्धोऽपि विवक्षितः । सर्वात्मब्रह्मसम्बन्धेनैव 'अहं मनुरभवं' मित्यादि सार्वात्म्यभावनानुभवादिकम् । न केवलस्य स्वस्य तादृशसार्वात्म्यानुभवसंभवः । सार्वात्म्यानुभवरूप महिमा अध्यात्मसम्बन्धेनैव । 'अस्मिन्' इत्यस्य इन्द्रे इत्यर्थः ; अस्मिन् प्रकरणे इति चार्थः । 'तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम्' इति गीतानिष्कर्षकोक्तिरवधेया । बह्वर्थग्राहकसम्बन्धशब्दः प्रयुज्यते । (12) 'आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् । तच्चास्मिन् वक्तरि आत्मत्वेनावस्थिते परमात्मन्येव हि संभवति । "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोजरोऽमृतः" इति भूतमात्राशब्देन अचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव आनन्दोऽजरोऽमृत इत्युपदिशति ।" इति श्रीभाष्यम् । सर्वशरीरस्य सर्वात्मनो ब्रह्म', एवाधारतया समस्तचेतनाचेतनात्मकविश्वसंबन्धसंभवो, नेन्द्रादेः । (१३) ब्रह्मणः संबन्धभूयस्त्वकथनं ब्रह्मणो निर्विशेषतां संबन्धमशून्यतां च निरुणद्धि । (१४) अस्मिन् वक्तरि इन्द्रे स्वान्तरात्मभूतस्वाधिकपरमात्मसंबन्धेनैव स्वपूर्वकृतमहापातकविनाशादिमहिमनिश्चयोऽस्ति । अतो न स्वव्यक्तिमात्रस्य हिततमोपास्यत्वं मन्येत, उपदिशेद्वा । स्वपापनिर्हरणाय स्वाधिकस्वान्तरात्मब्रह्मानुग्रहं अपेक्षमाणः, कथं सर्वपापेभ्यो मोक्षमाशासानाय स्वोपास्यत्वं हिततमत्वेनोपदिशेत् ।

ब्रह्मणि अहंग्रहो ब्रह्मोपासनेषु विधीयत इति मतत्रयसंप्रतिपन्नम् । आत्मत्वाधिकरणे अहंग्रह उपदिश्यत इत्यद्वैतग्रन्थोक्तयो विमर्शप्रथमभागे उदाहृताः । "परमात्मनः सर्वजीवगताहन्तास्पदत्वेन मुख्याहमर्थत्वं प्रत्यक्त्वमस्तीति द्रष्टव्यम्" इति श्रीरङ्गरामानुजमुनयः

'मद्यात्मैव मन्वादीनामात्मेति प्रतिपेदे। मन्वादिना सर्वेण स्वस्य ऐकात्म्यं साक्षात्कृतवानित्यर्थः।, 'ब्रह्मात्मोपासनस्य सर्वस्य ऐकात्म्य साक्षात्काराहंबुद्धित्वम्' इति च तदुक्तिः। 'ऐकात्म्यप्रत्ययसारं' इति माण्डूक्यश्रुतिः। सर्वव्यापकपरमात्मचैतन्येन स्वचैतन्यस्य व्याप्यत्वानुभवे परमात्मन्येव स्वाहंबुद्धिर्विश्राम्येत्। 'ममाऽस्मिन् विश्राम्यत्वहमिति मतिर्विश्ववपुषि' इति प्रार्थ्यतेऽहमर्थवादसङ्कल्पश्लोके। 'निरुपधिनियतस्वप्रकार्थन्तदृष्टिः" इत्यविभागाधिकरणसारः संगृह्यते सारावल्याम्। 'निरुपधिकतयानियतस्वशरीरिपर्यन्तदृष्टिः' इति चिन्तामणिः। 'निरुपधिकतयानियतो यः स्वप्रकारी स्वविशेष्यभूतः परमात्मा तत्पर्यन्तानुभवः' इति पदयोजना। 'जीवेशौ नित्यभिन्नौ श्रुतिरिह च सहेत्याहमुक्तस्य भोगं साम्ये पारस्थ्युक्तं स्मृतमपि स पृथग्भातु तस्मात्परस्मात्। मैवं तत्त्वं हि मुक्तौ स्फुरति तदनघो भेदभानांश इष्टः सिद्धदेहात्मभावेत्विह न हि घटते तत्स्वनिष्ठत्वदृष्टिः'। 'सर्वगत्वा दनन्तस्य स एवाहमवस्थितः' इतिवदविनाभावेनानुसन्धानं शरीरात्मभावेनानुसन्धानमध्यात्मविदामाजानसिद्धमित्यर्थ' इति चिन्तामणिः। 'परमात्मपारतन्त्र्यानवलोकनं न संघटेत। , तस्य जीवस्य स्वनिष्ठत्वेन स्वातन्त्र्येण दृष्टिः भानं न युज्यते किल। वस्तु यथवास्थितमेव हि भायात्। अत ईश्वरशरीरतया तत्पारतन्त्र्येणैव जीवात्मा भासेत न तु स्वातन्त्र्येणेति भावः। तथा चानयोः शरीरशरीरिभावनियतेन अहंब्रह्मास्मीत्युल्लेखेनैव मुक्तौ भानमिति हृदयम्" इति पदयोजना। 'तदनन्यत्वं' 'ब्रह्माविभागेनैव' इति सौत्रं तत्त्वस्थिति प्रदर्शनम्। ब्रह्मव्यतिरेकेणाभावः।' इत्युक्तमारम्भणाधिकरणभाष्यारंभे भगवत्पादैः। 'न तदस्ति विनायत्स्यान्मयाभूतं चराचरम्" इति भगवन्निगमनम्। स्वस्य ब्रह्मशरीरत्वात् तद्विना स्वस्याऽसत्त्वाप्तेः यथातत्त्वमेव दर्शनं भवति ब्रह्मविदाम्। 'सायुज्यं च ग्रहवत्। "भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः। तथा मुक्तावुत्तमायां वाह्यान् भोगांश्च भुञ्जते' इत्युक्तम्"- इति श्रीमध्वभाष्यम्। 'यथा ग्रहस्य

पुरुषान्तरं प्रविश्य भोगः तथा मुक्तस्येश्वरम् प्रविश्य भोग एव सायुज्यं न त्वैक्यमित्यर्थः" इति श्रीजयतीर्थमुनयः। अन्तरादन्तरः परमात्मा। 'सोऽन्तरादन्तरं प्राविशत्', 'वासुदेवे प्रविष्टधीः' इत्युक्तरीत्या यथा शास्त्रं सर्वात्मनि परमात्मनि अविभागेन प्रविष्टत्वे ब्रह्मण्यहंबुद्धिपर्यवसानात्, 'अहं मनुरभवं सूर्यश्चे' त्याद्यनुभवः। (१५) शास्त्रमिदं शारीरकम्। अतः शारीरकशास्त्रदृष्ट्येत्यप्यर्थः। (१६) न हीन्द्रः स्वमात्रेऽहंबुद्धिं विश्रमय्य एवं वदितुं क्षमः। सर्वात्मनि परमात्मनि यथाशास्त्रं यथातत्त्वं अहंबुद्धिं पर्यवसाय्यैवेदं वदति। (१७) उपासात्रैविध्यादिति हेतोः उपासात्रैविध्यप्रसंगादित्यर्थग्रहणमन्याय्यम्। दुःशकश्च। स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्" इति सूत्रविन्यासोऽवधेयः। 'कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रे अर्थवत्त्वप्रसङ्गात् इति व्याख्या यथा न सङ्गता तथैवात्र। 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धाऽवैयर्थ्यादिभ्यः" इति सूत्रमप्यवधेयम्। "अन्तवत्त्वमसर्वज्ञता वा" इति प्रथमान्तप्रयोगवत्सूत्रे स्यादित्यध्याहारः सुलभः। न तथा पञ्चम्यन्तहेतुपाठे। 'असन्दिग्धं' इति सूत्रप्रणयननियमः स्मर्तव्यः। 'उपासात्रैविध्यस्याश्रितत्वात्' इत्येव द्वितीयहेतुपदस्याकांक्षापूरणं न्याय्यम। 'इह तद्योगा" दिति तृतीयहेतुस्थेन इहेति पदेन, 'अन्यत्र श्रुतौ' इति पूर्वहेतुपदेऽध्याहारलाभः स्फुटः। प्रदीपकृदादिव्याख्यायामपि 'अन्यत्र श्रुतिष्वाश्रितत्वात्' इत्यध्याहारः समानः। तद्योगादित्यत्र तत्पदेन उपासात्रैविध्यस्य परामर्शः स्वरसः। अभ्युपगतप्राचीनसांप्रदायिकार्थोल्लङ्घनं न न्याय्यम्। "स्वतन्त्राणां त्रयाणामुपास्तौ वाक्यभेदः, न त्वेकस्य ब्रह्मणस्तद्धर्मेण" इत्यानन्दगिरिवाक्योक्ता युक्तिः वाक्यभेदशङ्कामुत्सारयति। (१८) यथा तद्विजिज्ञासस्व तद्ब्रह्म इति जिज्ञासासूत्रविषयवाक्ये ब्रह्मोपासनं विहितं, तथात्र पादान्तिमाधिकरणेऽपि उपासनमेव विधीयत इति सौत्रं प्रदर्शनम्। उपासनस्यैवात्र विधाने अनिष्टे उपासात्रैविध्यादिति हेतुपठनमसङ्गतं स्यात्। "मामुपास्वे' त्युपा-

सन्निधायकवाक्यं, 'आत्मोपदेशः', 'शास्त्रदृष्ट्या तूपदेशः' इत्युपदेश-शब्देन परामृष्टम् । 'तस्मात् ब्रह्मोपासनमेवात्र युक्त" मिति वार्तिक-व्याख्यानिगमनम् ।

अत्राध्यात्मशब्दितपरमात्मसम्बन्धः अपृथक्सिद्धिसंबन्धः शरीरात्मभावसंबन्धः अंशांशिभावः, प्रकारप्रकारिभावः, विशेषणविशेष्यभावः इति व्यवह्रियते ।

---

(४८६) — अहं मनुरभवमित्यादौ मन्वादिपदानां बाधितार्थबोधकत्वेन बाधायां सामानाधिकरण्यं इत्युक्तिरमूला श्रुतिसूत्रबाधिता च । परमात्मसंबन्धभूमा खलु सूत्रोक्तः । कात्र निर्विशेषसर्वसंबन्धशून्य-ब्रह्मप्रतिपादनप्रत्याशा ॥

(४९४) — विजानीहि विद्यात् उपास्व इत्यादीनां प्रत्ययावृत्ति-रूपोपासनपरत्वमावृत्त्यधिकरणनिर्णीतम् । अत्राप्युपासापरत्वस्य स्पष्टोक्तेः उपासाविधानमेव ।

(४९५) — नेतरोऽनुपपत्तेः इति सूत्रेण 'ब्रह्म इतरभेदरहितं इत्युक्त-मिति सूत्रार्थवर्णनं स्वमतसर्वग्रन्थविरुद्धम् । 'इतरः जीवः न आनन्दमयः । अनुपपत्तेः-असंभवात् । नानन्दमयः परमात्मा अनुपपत्तेः' इति प्रदीपोक्तः पुच्छपक्षसूत्रार्थः । इत्थं मिथ्यावदनेन स्वव्याघातेन च का प्रतिष्ठा लभ्येत ॥

---

## अथ सारावली ।

विद्याप्रातर्दनी सा वदति हिततमोपास्तिकर्मेन्द्रमेव
ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न ।
ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च
प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैघस्यभग्नः ॥

शिष्टनामाश्रितेयं विद्या। न्यायश्च प्रतर्दनन्याय इति प्रसिद्धः। पूर्वमीमांसायां व्युत्पादितः ऐन्द्रन्यायोऽन्यः। 'ऐन्द्रीयागार्हपत्यम' इत्यत्र इन्द्रशब्दस्य गार्हपत्ये रूढ्यभावात् गौणीवृत्तिर्व्युत्पत्तिर्वा समाश्रयणीया। उभयमप्याहुः 'इन्द्रत्वमग्नौ गौणं स्यात् यज्ञसंबन्धकारितम्। इन्द-त्यर्थानुसाराद्वा स्वकार्ये सोऽपि हीश्वरः" इति चिन्तामणिरैन्द्रीन्यायमुप-पादयति। "व्युत्पत्त्या परमात्मानं तत्तदुक्तिः प्रकाशयेत्। तल्लिंगा-नन्यथासिद्धौ तद्विशिष्टावलम्बिनो।" आकाशप्राणशब्दयोः परब्रह्मणि व्युत्पत्तिर्व्युत्पादिता आकाशप्राणाधिकरणयोः। अत्र निरवकाशप्राणेन्द्र-लिङ्गसत्त्वात् तद्विशिष्टत्वेन परमात्मैवोपास्यत्वेनोपदिश्यते। 'तल्लिंगा-नन्यथासिद्ध्यधिगमनबलात् तद्विशिष्टे विवक्षा स्यादीशेज्योतिरिन्द्रा-द्यभिलपनपरेऽहंत्वमादीरिते च" इति तुरीयश्लोके इदं वक्ष्यते। विद्या-प्रातर्दनी वदति, प्रतर्दनाय इन्द्रप्रोक्ता विद्या वदति इत्यनेन इन्द्रस्य वक्तृत्वेन सौत्रपरामर्शो द्योत्यते। पूर्वपक्षे सिद्धान्ते चोपासनाविधानमेवेति स्पष्टी-क्रियते 'हिततमोपास्तिकर्म वदति' इति पूर्वपक्षस्य, 'ब्रह्म त्रेधा ह्युपास्यं', इति सिद्धान्तस्य च वर्णनेन। 'विद्या वदति' इत्यस्य वक्ता इन्द्रो वदती-त्यर्थः 'न वाचं विजिज्ञासीत, किन्तु वक्तारं विद्यात् इत्येतद्विद्यावाक्या-देव ग्राह्यः। विद्यावाक्यरीतिमनुसरति संग्रहश्लोकः इति रसः अनुभाव्यः। हिततमोपास्तिकर्मत्वं परब्रह्मलिंगम्। वक्तुरिन्द्रस्य आत्मनः (स्वस्य) उपास्यतयोपदेशः इन्द्रोपासनविधानसंशयजनकः। 'ख्यातप्राणेन्द्रचिह्ना-न्वितमपि' प्राणश्चेन्द्रश्च प्राणेन्द्रौ ख्यातौ। जीवशरीरधारणमुख्यो-पकरणवायुरूपतया, त्रयस्त्रिंशद्देवाधिपतितया च प्रसिद्धौ च तौ प्राणेन्द्रौ च ख्यातप्राणेन्द्रौ, तयोश्चिह्नैः त्रिशीर्षत्वाष्ट्रहननारुन्मुखयतिशिक्षणादि-रूपैः, आयुस्सत्तानियामकस्वसत्तादिरूपैश्च चिह्नितैरन्वितं युक्तमपि।" प्रातर्दनी, प्रतर्दनः प्रसिद्धः। तत्पिता दिवोदासः। दिवमुदास्ते इति दिवोदासः। इतरे कामात्मानः दिवो दासा भवेयुः। 'देवानां पशुः' 'तं देवा भक्षयन्ती'ति श्रुती भाव्ये। तत् - तस्मात्। 'कारणं

तु ध्येयः' हिततममोक्षायोपास्यस्यविश्वकारणत्वं नियतम्। तस्यैवमोक्षार्थमुपास्यत्वात्। हिततमोपास्तिकर्मत्वादिन्द्रो विश्वकर्तेति पूर्वपक्ष्यभिमानः। "ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कश्चकं स्वात्मना च" इति सिद्धान्तनिष्कर्षः। प्रतिज्ञासूत्रस्थ 'तथा' शब्देनापीदं सूचितम्। 'जीवमुख्यप्राणलिङ्गादिति चेन्न — न जीवमुख्यप्राणयोः स्वरूपेणोपास्यत्वं, किन्तु तयोर्ब्रह्मप्रकारतया, उपास्यब्रह्मविशेषणतयाऽन्वयः, ब्रह्मैवात्र इन्द्रजीवमुख्यप्राणप्रकारतया अमृतत्वादिस्वात्मना च उपास्यत्वेनोपदिश्यते इति तुरीयसूत्रार्थ उच्यते। 'हि' इति श्रुत्यन्तरप्रसिद्धिः सूच्यते आश्रितत्वादिति हेतुमाश्रित्य। बहुविधचिदचित्कश्चकं — बहुविधचिदचिद्विशिष्टं ब्रह्म। "सर्वान्तर्यामितत्त्वं स्वयमिह चिदचिद्विग्रहैर्वाविशिष्टं यस्यालम्बनं सा भवभयशमनीवीतरागस्य विद्या। यस्तूपास्ते यथोक्तं तदितरदखिलं ब्रह्मदृष्ट्या स्वतो वा नैतस्य ब्रह्मनीडयोद्गतिरपि न पदव्यर्चिरादिर्नमोक्षः" इति तत्त्वमुक्ताकलापगीतमपि भाव्यम्। 'अचिद्विशिष्टोपासनं चिद्विशिष्टोपासनं केवलपरमात्मोपासनमिति। ......अयमत्र निर्णयः, हिततमोपास्तिकर्मत्वादिभिः परमपुरुषस्यैव प्रतर्दनविद्यायामिन्द्रशब्दप्रधानवाच्यत्वं सिद्धमेव। त्वाष्ट्रवधादिना लिंगेन तद्विशेषणत्वेन प्रसिद्धेन्द्रोऽपि परिगृह्यते। एवं प्राकरणिकेन लिङ्गविशेषेण प्रसिद्धप्राणोऽपि स्वीक्रियतां न तु स्वरूपेण" इति चिन्तामणिः॥

ज्योतिः प्राणेन्द्रशब्दाः परतरविषयाः कारणव्याप्तधर्मात्
इत्येतत्साध्वमीषां बहुविहतिमतीख्यातमात्रे तु वृत्तिः।
तत्कौक्षेयानलात्माकथित इह तथाध्यानतस्तत्फलाप्त्यै
मुख्यप्राणादिलिंगं तदुपहितपरोपासनान्मोक्षणाय॥

'ज्योतिरादिशब्दानां विशेषणविशिष्टपरमवस्तुवाचित्वं संमतम्। विशेषणमात्रवाचित्वमसंमतम्। कौक्षेयज्योतिषैक्यमुपासनार्थं' मिति चिन्तामणिः। 'तथाध्यानतः'। 'तथादृष्ट्युपदेशात्" इति वैश्वानराधिकरणसूत्रखण्डः स्मार्यते। उभयत्र जाठरशरीरकपरमात्मोपासनमुपदिश्यते।

अत्र श्रीशङ्करभाष्यसम्मतिश्च प्रदर्शिता । यथा ज्योतिरधिकरणे जाठरशरीरकपरमात्मोपासनं तथाऽस्मिन्नधिकरणे प्राणेन्द्रजीवशरीरकपरमात्मोपासनम् । 'परोपासनात्' मोक्षार्थब्रह्मविद्यैवेयम् ॥

कार्यं यत्कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दैः
निर्दिष्टे ब्रह्मणि स्यात् क्वचिदगतिहतारूढिरैन्द्रीनयेन ।
तल्लिंगानन्यथासिद्ध्यधिगमनबलात्तद्विशिष्टे विवक्षा
स्यादीशे ज्योतिरिन्द्राद्यभिलपनपरेऽहंत्वमादीरिते च ॥

पूर्वार्द्धे आकाशप्राणशब्दयोरूढिभङ्गः, योगार्थेन ब्रह्मपरत्वमाश्रीयते इति कथ्यते । तत्र ऐन्द्रीन्यायावलम्बः । ज्योतिरधिकरणेऽत्र च निरवकाशज्योतिरादिलिङ्गसत्त्वात् न रूढिभङ्गो न्याय्यः, "अतो रूढ्यर्थविशिष्टपरमात्मा गृह्यते । "अहं ब्रह्मास्मीत्यत्र स्वात्मविशिष्टपरमात्मपरत्वम् । 'ईशे' इति पदेन 'एष सर्वेशः' इति श्रुतिर्ज्ञाप्यते ! 'स मे आत्मा' इति वदन्निन्द्रः इदं स्पष्टयति । 'मां विजानीहि' इत्यस्य मम आत्मानं सर्वेशमुपास्वेत्यर्थः इति इन्द्रेणैव स्पष्टीकृतं निगमने । 'ईशे' इति पदेनेदं व्यज्यते । 'स मे आत्मेति प्रतिपादितविज्ञानात्मान्तर्यामित्वं ब्रह्मण एवासाधारणं लिङ्गम्' इति प्रदीपकृदपि ऋजुतयाऽस्मन्मतमेव वदति, जीवेश्वराभेदवाद चात्र भञ्जयतीति सन्तुष्यामः । "अत्रेदमवगन्तव्यम् । यथा 'ऐन्द्र्यागार्हपत्यमुपतिष्ठते' इति श्रुत्या मन्त्रस्यैन्द्रप्रतिपादनसामर्थ्यलक्षणंलिंगं बाधित्वागार्हपत्योपस्थानपरत्वमुपपद्यते, न तथेह श्रुत्यादीनामन्यतमेन प्रमाणेनान्यतमस्यात्यन्तबाधः क्रियते, किन्तु कथञ्चित् स्वार्थमपरित्यज्यैव ब्रह्मपरतया तस्यापि वृत्तिराश्रीयते" इति शारीरकन्यायसंग्रहोऽपि अस्मदुक्तसमानः ॥

स्वेच्छातः सर्वहेतुः शुभगुणविभवानन्तनिस्सीमहर्षः
शुद्धाकर्मोत्थनित्याकृतिरनुपधिकाकाशनादिस्वभावः ।
सप्राणाप्राण भेदस्थितिभिदुरजगत्प्राणनो दिव्यदीप्तिः
प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैः सप्तभिः प्रत्यपादि ॥

'अतीतानां सप्तानामधिकरणानां सप्तसु भगवद्गुणेषु तात्पर्यमनुक्रमादाचष्टे' इति चिन्तामण्यवतारिका । स्वेच्छातः सर्वहेतुः । ऐक्षत इति श्रुतिपदस्य 'ऐच्छत् ' इत्यर्थः । 'सोकामयत' इति श्रुतिरेतत्समानार्था । 'ऐतदात्म्यमिदं सर्वं' इति श्रुतिखण्डः स्मार्यते सर्वपदेन । हेतुत्वं च ईक्षणशब्दवाच्यसंकल्पेन तत्तत्कार्यमनुप्रविश्यात्मत्वेनावस्थानेन । तादृशब्रह्मात्मकत्वं विश्वस्य ईक्षत्यधिकरणवाक्य एव ज्ञाप्यते । तदर्थकमेव तत्र 'तत्वमसि वाक्यम् । 'शुभगुणविभवानन्तनिस्सीमदर्पः ' अनन्तमंगलगुणवान् अनन्तविभूतिमान् निरवधिकानन्दवान् । दर्पशब्देनानन्दगुण उच्यते । निस्सीमानन्दीत्यर्थबोधनेन आनन्दीति श्रुतिपदं ज्ञाप्यते । 'शुद्धाकर्मोत्थदिव्याकृतिः ' । सर्वपाप्मोदितत्वमपि शुद्धशब्देन गृह्यते । 'अनुपाधिकाकाशनादिस्वभावः ' अयं आकाशशब्दयोगार्थः । अनन्याधीनासंकुचिताकाशनयुक्तः । आकाशते आकाशयतीति च व्युत्पत्तिद्वयाश्रयणम् । आदिपदेन ज्यायस्त्वपरायणत्वे । प्रभुः-परिवृढः । 'ब्रह्मपरिवृढं सर्वतः ' इति यास्कः । प्रभुरिति लोकाधिपतिः सर्वेशः इति श्रौतपदे स्मार्येते । 'सर्वभूताधिवासं यद्भूतेषु च वसत्यपि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः इति ' इति अमृतबिन्दूपनिषदुपसंहारः । 'तद्ब्रह्मवासुदेवात्मकमहं भवामि ' इति तत्र श्रीशंकरानन्दव्याख्या । वासुदेवः सर्वमिति भगवद्भजनप्रकारः । 'सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः । इति मतिरचला भवत्वनन्तेहृदयगते ' इति भगवान् धर्मराजः । 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारत ॥ ' इति गीता ॥



॥ अथ द्वितीयपादः ॥

## ॥ सर्वत्रप्रसिद्धोपदेशाधिकरणम् ॥

'प्रथमे पादे जन्माद्यस्य यतः इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तम्। तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्वं नित्यत्वं सर्वशक्तित्वं सर्वात्मकत्वमित्येवंजातीयका धर्माः उक्ता भवन्ति' इति श्रीशाङ्करभाष्यप्रथमवाक्येन पूर्वपादस्य कृत्स्नस्य सगुण-ब्रह्मप्रतिपादकत्वं ऋजुतया स्पष्टं भापितम्। स्पष्टब्रह्मलिंगपादः स्पष्टमेव बहुगुणं ब्रह्मैव प्रतिपादयेत्, न धर्मशून्यं निर्विशेषम्। अत्र भक्तशाण्डिल्य-मुखेन ब्रह्मणो भजनप्रकारविशेष उपदिश्यते। सर्वत्र वसति वासुदेवः इति वासुदेवभजनप्रकारः। सर्वत्र वसति, मयि निकृष्टतमेऽपि वसति, मां साधुकर्मकारयितुं मामुत्तारयितुं मां स्वपरमव्योमस्थानमुन्नेतुम्, मया निचाय्यत्वाय, अत्यर्भकात्यशुद्धमद्धृदयौकसि नित्यवासं करोति मामनु-ग्रहीतुम्। हार्दानुग्रहः अस्मन्मोक्षणकालिकः तदोकस्सूत्रप्रसिद्धः। एतदधिकरणार्भकौकः सूत्रेण, एतत्सूत्रस्मारकतदोकस्सूत्रेण च हार्दस्यानु-ग्रहमयत्वं सौलभ्यादिमयत्वं चानुभूयते शाण्डिल्येन बादरायणेन च। 'सर्वानुग्राहकत्वेन' इति वासुदेवविषयेऽमृतविद्भूक्तन्मत्रानुभूयते। हृदयस्य वासुदेवालयत्वे। न हृदयं शान्तिमयं कर्तव्यमित्यादावेवोपदिश्यते "शान्तः सन्नुपासीत" इति। शान्तिसंपादनं च विश्वस्य वासुदेवात्म-कत्वसततानुभवेनेति चोपदिश्यते। अत्र वासुदेवशब्दनिर्वचनश्लोक-प्रथमशब्देन पादः आरभ्यते। अनन्तरः पादः द्युभ्वादिकस्य कृत्स्नस्य विश्वस्य स एवायतनं वासस्थानमिति ज्ञापयितुं, 'द्युभ्वाद्यायतनं' इत्या-रभ्यते। सूत्रानुगुण्य सद्धिविमर्शे विस्तरेणास्माभिर्बहुरसाः प्रदर्शिताः। प्रथमाध्यायस्य कृत्स्नस्य तत्रास्माभिर्विस्तरेण विचारितत्वात् नात्र तेषां पुनः कथनापेक्षा। तत्र प्रदर्शिताः केचन रसा एवात्र प्रदर्श्यन्ते। "यतः स्वभावतः सर्वदा पुरुषः (क्रतुमयः) ध्यानप्रधानः काममय एवेत्यादिश्रुत्यन्तर-

दर्शनाच्च, अतो ध्यानकरणेऽस्ति सामर्थ्यम्। न च तत्फलेप्यस्ति सन्देहः यतः 'यथा क्रतुरस्मिन् लोके भवति तथेतः प्रेत्य भवति' इत्यपि – तं यथा-यथोपासते 'यं यंवापि स्मरन् भावं त्यजत्यन्तेकलेवरम्' इत्यादि श्रुतिस्मृतिभ्यां सुप्रसिद्धम्, तस्मात् तदुभयस्य स्वभावसिद्धत्वात् केवलं बहिर्विषयेभ्यश्चित्तविनिवृत्तिर्ब्रह्मध्यानेऽपेक्ष्यते 'अतः शान्तस्तत्क्रतुं (ब्रह्मक्रतुं) कुर्वीतेति परमार्थः' इति वार्तिकव्याख्यारसः सर्वैलोकानुभाव्यः। ब्रह्मोपासनाप्रकारप्रदर्शिकायां अस्यां विद्यायां व्यञ्जिताः रसाः अद्भुतं निरूपितास्तद्व्याख्यया। यत्किमपि ध्यायन्नेव पुरुषः कालं नयति। वित्त वा स्त्रियं वा अपत्यानि वा सततं ध्यायति। ध्यानसामार्थ्यमस्ति सहजम्। तत् ब्रह्मध्याने विनियुज्यताम्। कामं ध्यायतु स्वापत्यादीन्। तेषां च ब्रह्मात्मकत्वं ब्रह्मांशत्वं तत्त्वम्। आनन्दमयब्रह्मांशत्वेनैव ब्रह्मानुग्रहेणैव तेषां स्वस्मै सुखप्रदत्त्वमिति रहस्यमुद्घाट्यते मैत्रेयीब्राह्मणे। आनन्दरूपफलप्रदत्वं ब्रह्मसंकल्पायत्तं सुखवद्व्यासमानत्वं तत्तद्वस्तूनां आनन्द ब्रह्मात्मकत्वायत्तम्। तज्जलान्त्वात् सर्वं प्रियं वस्तु ब्रह्मेति भावय। इत्थं च त्वन्मनसः सततं ब्रह्मैव विषयो भवेत्। वासुदेवः तव सन्निकृष्टतमः। स तवान्तर्वसन्नन्तरात्मा तवान्तरंगतमः। दारपुत्रादयस्तव बाह्याः। एष ह्येवानन्दयाति त्वाम्, न भार्या पुत्रादयः। प्रियाभार्येव त्वामहरहः परिष्वजति। स्वयंग्रहसुखं ते ददाति। प्राकृतशरीरस्य प्राकृतशरीरेण परिष्वङ्ग एव भवेत् भार्यापरिष्वङ्गः, नात्मनोः साक्षात्परिष्वङ्गः। आत्मपरिष्वङ्गं दातुं वासुदेव एव समर्थः। तीव्रं कामयते सः त्वत्सततपरिष्वङ्गम्। मा भञ्जय तत्तीव्राशाम्। 'कलेबरात् इतः संसारात्प्रेत्य एतमभिसंभवितास्मि।' इति शाण्डिल्यत्वरानुभाव्या। 'अभिसंभवितास्मीत्यस्य प्राप्स्यामीत्यर्थः।" इति श्रीशांकरभाष्यम्। तत्समीपप्राप्तिमार्गश्च "श्रुतोपनिषत्कगत्यभिधानाच्च" इत्येकान्तरान्तराधिकरणे वक्ष्यते। यथा ब्रह्म सर्ववेदान्तप्रसिद्धं सर्वत्र वसत्त्वेन प्रसिद्धं, तथा तल्लोकप्राप्ति मार्गश्च सर्ववेदान्तप्रसिद्धः। 'तत्प्रथितेः', 'अनियमः सर्वासाम्' इति तस्य सर्ववेदान्तप्रसिद्धिः सूत्रिता परमादरेण।

ब्रह्मणो नित्यत्वविभुत्वसर्वगतत्वसर्वान्तर्यामित्वसर्वज्ञत्वसर्वशक्तित्वसर्वेश्वरत्वसर्वव्यापित्वादयो गुणा भवन्ति । न ह्यनेवंगुणकस्य सर्वजगत्कारणत्वं संभवति" इति वार्तिककाराः सगुणब्रह्मगुणसंग्रहणमेव ब्रह्मसूत्रकृत्यमिति स्पष्टयन्ति । यत्सर्वेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणं, इह च 'सर्वं खल्विदं ब्रह्म' इति वाक्योपक्रमे श्रुतं तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यते" इति श्रीशांकरभाष्यमत्र बहुधर्मविशिष्टब्रह्मोपासनं वर्णयति । प्राणशरीरविशिष्टत्वमप्येकम् । पूर्वाधिकरणे प्राणशरीरत्वादिविशिष्टस्योपासनमुक्तम् । इत्थं च विषयवाक्यद्वयस्य संगतिः । प्राणशरीरत्वस्य जीवेऽत्र श्रावितत्वात् इत्याक्षेपसंगतिर्वर्णिता सारावल्याम् ।

अत्र ईश्वरस्य प्रसादो मोक्षहेतुत्वेन वर्ण्यते । 'एकनीडत्वेऽपि जीवब्रह्मणोर्विशेषः' 'द्वासुपर्णा' इति मन्त्रवर्णात् । विशेषादिति वक्तव्ये वैशेष्यादिति वदन् अत्यन्तवैलक्षण्यं तयोः सूचयति । तथा च श्रुतिः छायातपौ ब्रह्मविदो वदन्तीति' इति वार्तिकेनाऽत्र जीवब्रह्मभेद एव दृढं निर्धार्यते सूत्रकृतेति स्पष्टीकृतम् । अत्र बहुत्रान्यत्रच ब्रह्मसूत्रेषु जीव ब्रह्मभेदमेव दृढीकुरुते आचार्य इति स्पष्टं भाषितं भगवत्पादैर्दहराधिकरणे । अत्र एतेन 'विशेषादिति प्रयोक्तव्ये वैशेष्यादिति पदं धर्ममात्रतोऽयं जीवब्रह्मणोर्भेदः न स्वरूपतोपीति सूचयतीति अद्वैतवादानुगुण्यम् । येषां तु मते जीवब्रह्मणोः स्वरूपतो भेदः तत्र संभोगप्राप्तिशंकैव नोदेतीति सूत्रमिदं वितथमापद्येत' इति प्रदीपोक्तिः सुनिरसा उपहास्या च भवति । अत्र बहुत्र च द्वैतवाद एव प्रदर्श्यते सिद्धान्त्यते च सूत्रकृतेति स्पष्टं भाषितं भगवत्पादैः । परमात्मनो जीवादन्यत्वं दृढयति इति च स्पष्टमुक्तम् । अत्रापि 'अत्राह । श्रुतिस्तु' इत्यादि भाष्यखण्डेन सूत्राणां स्वाभिमत श्रुत्यर्थविरुद्धत्वं स्पष्टमुक्तमार्जवमनुसृत्य । 'यदि च सन्निधानमात्रेण वस्तु शक्तिमनाश्रित्य कार्यसम्बन्धोऽभ्युपगम्येत आकाशादीनामपि दाहादिप्रसंगः । सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ' इत्यनर्घया

श्रीशङ्करभाष्योक्त्या दत्तोत्तरम् प्रदीपोक्तम् । न ह्याकाशादेर्घटस्वन्तरैस्सहस्वरूपैक्यम् । अत्र भोक्त्रापत्तिसूत्रे, न स्थानतस्सूत्रे च सहसन्निधिना ईश्वरस्य दोषप्रसंगमाशंक्य, ईश्वरस्वाभाविकशक्तिविशेषेण तन्निवारणं क्रियते । सा शक्तिर्गीयतेश्रुत्या 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी' इति । 'असंगो न हि सज्जते अशीर्यो न हि शीर्यते' इति च । 'सर्वोपेता च तद्दर्शनात्' इति सौत्रं तत्प्रदर्शनम् । उभयोरेकनीडत्वात् एकगुहाप्रविष्टत्वात् समानभोगप्रसंगः । वैशेष्यपदस्य "हेतुवैशेष्यात् परस्य हि छन्दतः जीवरक्षार्थे शरीरान्तर्वासः" इति भगवद्रामानुजवेदान्तसारभाषितार्थः । जीवं रक्षितुं तद्धृदये तेन सहवसति न कर्मवश्यत्वेन सुखदुःखभोगार्थं यथा जीवः । 'वासहेतुवैशेष्या' दित्यर्थः । तत्साक्षित्वभावेन तमुत्तारयितुं स्वपदमुन्नतु च तत्र तेन सह वसति' इति गुहासूत्रविषयवाक्ये वक्ष्यते अनश्नन्न्यः सः । 'तस्य हरेः विशेषसामर्थ्यवत्वात्' इति सूत्रार्थमणिमञ्जर्याम् । 'सगुणब्रह्मणः कथञ्चन जगत्कर्तृत्वेन जीवैस्साकं कर्तृत्वेन साम्यं वर्तते, भोक्तृत्वं तु न कथमपि' इति प्रदीपोक्तिर्वैपरीत्यमयी । 'भोगमात्रे साम्यं न जगद्व्यापारकर्तृत्वे' इति सूत्रकारः । तद्विपरीता प्रदीपोक्तिः । 'कार्यं ब्रह्म हिरण्यगर्भोपि जीवविशेष एवेति न 'भोगमात्रसाम्यलिंगात्' इति सूत्रविरोधः' इति प्रदीपोक्तिस्तत्कर्तुरुन्मादपिशुना । हिरण्यगर्भजीवस्य कथं जगज्जन्मादिकर्तृत्वम् । निर्गुणसाक्षात्कारवतामेव जगत्कर्तृत्वादिव्यापारः न कार्यब्रह्मनिष्ठया सगुणमुक्तानामिति बहुत्रान्यत्र स्वोक्तमपि व्याहन्यते । 'अयं चार्थो वार्तिककारेणापि जगद्व्यापारसूत्रानुसन्धानेन सूच्यते' इति प्रदीपकृतावार्तिककृति स्वभ्रान्तिर्मिथ्यारोप्यते । 'यथा च निरवग्रहसत्यसंकल्पत्वादयो योगिनोऽपि नोपपद्यन्ते तथा वक्ष्यते' जगद्व्यापारवर्जमित्यत्र' इति वार्तिकवाक्यम् । 'मुक्तिफलानियमपदमपि तृतीयाध्यायस्य साधनविचारतायां गमकं' इति वदन्प्रदीपकृत् मुक्तिफलसूत्रस्य स्वमतार्थाज्ञानं स्फुटयति । मुक्तिफलपदस्य न मुक्ति-

फलोपासनार्थकत्वं तन्मते यथाऽस्मन्मते । मोक्षरूपफलमित्येव तद्भाष्यार्थः । कर्मधारयो न बहुव्रीहिः । मोक्षरूपफले नोत्कर्षापकर्षः इति तद्भाष्यम् । प्रथमाध्यायप्रथमपादस्य ब्रह्मेतरलिंगादिवाधेन प्रवृत्तिः इति प्रदीपोक्तिरसमीचना । आकाशप्राणाधिकरणयोः श्रुतिर्बाधिता स्पष्टब्रह्मलिंगैः । ज्योतिरधिकरणे न जाठराग्निलिंगस्य बाधः, जाठराग्न्युपाधिकब्रह्मोपासनवर्णनेन जाठराग्न्यपरित्याग एव – प्रथमपादे आनन्दमयप्रातर्दनव्यतिरिक्तेतरपञ्चाधिकरणानां सगुणब्रह्मपरत्वमित्यभ्युपगम्यते प्रदीपेन । आनन्दमयप्रातर्दनयोरुपास्यसगुणब्रह्मपरत्वमेव प्राचीनसांप्रदायिकार्थः इति च संप्रतिपन्नम् । जिज्ञास्यतया प्रतिज्ञातं ब्रह्म तटस्थलक्षणविधया 'जन्माद्यस्य' यतः इत्यादिभिः 'श्रुतत्वाच्च' इत्यन्तैः सूत्रैः प्रतिपाद्यते' इति वदता प्रदीपेन जन्माद्यधिकरणमारभ्य चतुर्णामधिकरणानां कारणसगुणब्रह्मपरत्वमुक्तम ।

(५०४) — 'न हि पक्षसाध्ययोरन्यतरस्यापि निर्देशं विना सूत्रकाराणां हेतुमात्रसूत्रणं दृष्टचरम्' इत्याक्षेपः उद्भाव्यते साहस्त्र्या । एतद्दोषपरिहारिका अस्मद्भाष्यव्याख्यारीतिरेवाश्रिता न्यायरक्षामणाविति पश्यतु साहस्रीकृत् । 'विशये प्रायदर्शनात्' इति प्रदर्शितदृष्टान्तः असमीचीनः । विप्रतिषिद्धसमवाये भूयसांस्याद्बलीयस्त्वं' इति सूत्रं भाव्यम् । 'अनुकृतेस्तस्य च' इति सूत्रे तस्येति पदेन 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति विषयवाक्यं सूच्यते इति तन्मतम् । 'तत्र भान्तमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति, स किं तेजोधातुः कश्चित्, उत प्राज्ञ आत्मा इति विशयः प्रदर्शितः शांकरभाष्ये । तस्येति श्रुतिवाक्ये तस्येति परामृष्टः पक्षः । तेन तस्येति सौत्रपदेन पक्षः समर्प्यते । न 'तस्येति पदस्य हेतुप्रविष्टत्वं, यथा साहस्रीभ्राम्यति । 'अनुकृतेः अनुकरणमनुकृतिः' इति सिद्धान्तभाष्यारंभे 'अनुकृतेः' इत्येव हेतुर्भाषितः । 'जगद्वाचित्वात्' इति सूत्रं कदाचिदुदाहरणं स्यात् । सति संभवे सूत्राक्षरैरेव पक्षसमर्पणं न्याय्यम् । संभवश्च

प्रदर्शितोऽस्मद्भाष्येण श्रीमद्दीक्षितैश्च । सर्वत्रेति पदस्य सर्वमित्यादिश्रुतिवाक्ये 'सर्वं ब्रह्म' इति सर्वसमानाधिकरणतयोक्तब्रह्मशब्दसमानाधिकरणतया पक्षसमर्पकत्वम् । सर्वत्रेत्यत्र त्रलः प्रथमार्थकत्वमप्यस्तीति न जानाति प्रदीपकृत् । इदं च स्पष्टीकृतं परिमले 'अन्यत्र धर्मादन्यत्राधर्मात्' इत्यादिवाक्यान्युदाहृत्य । 'अत्र सर्वत्रेति प्रयोगात् सर्वं खल्विदंवाक्यस्य न साक्षाद्विषयत्व' मिति प्रदीपोक्तिस्तदज्ञानमूला । 'सर्वं खल्विदं इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं' इति श्रीभाष्यमप्यत्रावधेयम् । इदं विस्तरेण विचारितमस्माभिस्सूत्रानुगुण्यसिद्धिविमर्शे ।

(५१३) — सत्यकामत्वादिगुणानामवान्तरतात्पर्यविषयाणां नाभिध्यात्व" मिति वदन्ती साहस्री "विवक्षितगुणोपपत्तेश्च" इति स्पष्टसूत्रेण बाध्यते । बाधितुमिष्टानां गुणानां शास्त्रकृता श्रुतिविवक्षितत्वोक्तिः, तदुपपत्त्युक्तिश्च शास्त्रकृतं नूनं पंके निमज्ज्य मलिनयेत् ॥

सर्वत्वं कर्मभिःस्वैर्जनिमतिघटते ब्रह्मशब्दोऽत्र चैवे-
त्यल्पस्थानोल्पमानस्सुखतदितरभुग्जीव एवेति चेन्न ।
तज्ज्ञत्वादेरनूक्तेर्विविधगुणभिदादर्शनात्सर्वतादेः
स्वारस्यादप्यणुत्वं ह्युपधिकृतमिहोपास्तये ज्यायसिस्यात् ॥

सर्वत्वं, स्वकर्मभिर्नानाजन्मभिर्घटेत । पर्यायेण सर्वजनित्वसंभवः । ब्रह्मशब्दः क्वचित् जीवेऽपि प्रयुज्यते । 'एष म आत्मा अन्तर्हृदये' इत्यन्तर्हृदयवासरूपाल्पस्थानत्वं, 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यणीयस्त्वव्यपदेशश्च आराग्रमात्रे जीव एव घटेत, न सर्वगते परमात्मनि । 'सुखतदितरभुक्' । भोगायतनत्वं शरीरस्य प्रसिद्धम् । सुखदुखभोगो जीवस्यैव । 'तज्ज्ञत्वादेरनूक्तेः' । जन्मस्थितिलयकारणत्वस्य प्रसिद्धत्वेनानुवादात्, प्रसिद्धत्वेनोपदेशात् । जन्मादिकारणत्वस्य ब्रह्मणि प्रसिद्धिः पूर्वपादे संपादिता तदसंभवनिराकरणेन । 'विविधगुणभिदा-

दर्शनात्' अनेन 'विवक्षितगुणोपपत्तेश्च' इति सूत्रहेतुसंग्रहः । 'सर्वैतादेः स्वारस्यादपि' । 'सर्वं खल्विदं ब्रह्म' इति चेतनाचेतन-विभागाऽभावेनाऽविशेषेण सर्वेषामपि ब्रह्मतादात्म्यमुच्यते ।' तत्तु जीवे न संभवति । एकस्य चेतनस्य चेतनान्तरं प्रति शरीरत्वाभावात् । परमात्मनि तत्संभवत्येव, 'यस्यात्मा शरीरं, यस्य पृथिवी शरीर' मिति सर्वशरीरत्वश्रवणात्' इति चिन्तामणिः । 'विविधगुणदर्शनात्, विविधभिदादर्शनात्, इत्यप्यर्थो गृहीतुं शक्यः । कर्मकर्तृव्यपदेशादि-भेदस्य भिदाशब्देन ग्रहणम् । 'अणुत्वं ह्युपाधिकृतमिहोपास्तये ।' इह — हृदये, उपास्तये उपास्यत्वाय । 'ज्यायसि' 'ज्यायान्पृथिव्याः' इत्युक्तरीत्या विश्वस्मात् ज्यायसि । ज्यायसः औपाधिकाणीयस्त्वेनो-पासनं संभवति । विपरीतस्य न संभवोऽस्ति । विश्वतो ज्यायस्त्वं आकाशज्योतिरधिकरणवाक्येक्तमत्राप्युक्तम् ॥

इत्थं ब्रह्मगुणानुभवोभूरि दृश्यतेऽधिकरणेषु ॥

---

## अथ अत्त्राधिकरणम् ।

अत्र वक्तव्यं सर्वं प्रायेणोक्तं एतद्ग्रन्थपूर्वभागे, अन्यत्र च । अत्र विश्वसंहर्तृत्वलक्षणसमन्वयः । विश्वसंहर्ता अस्मदनादिकर्मबन्धं संहरेत् । तदर्थमेव सखित्वेनास्मद्हृदयगुहां करुणया प्रविष्टः । अस्मा-नुन्नेतुमेव सततमविनाभूततया वसत्यस्माभिस्सह वासुदेवः । एनं देवं (वासुदेवम्) अध्यात्मयोगाधिगमेन मत्वा धीरो हर्षशोकौ जहाति । सर्व-पाप्मविरहे शुद्धमसमत्स्वरूपं परमात्मनः आद्यमन्नमिव भोग्यं भवति । सोऽप्यस्माकमन्नं भवति । इत्थं परस्परभोगो मुक्तौ । 'अहमन्नं' 'अहमन्नादः' इति मुक्तगीतम् । परमात्मना इत्थमस्मच्छुद्धस्वरूपादना-नुभवस्याकांक्षणं ध्वन्यते 'अत्ता' इति पदेन ॥ 'सर्वाघध्वंस उक्तः

फलमपि परमं ब्रह्म च व्याप्तमन्नम्' इति वैश्वानराधिकरणसारावलिः । अद्यते इत्यन्नमिति व्युत्पत्त्या अहमन्नमहमन्नादः' इति श्रुत्या च परं ब्रह्म अन्नशब्देनाभिधीयते' इति तत्र चिन्तामणिः । यथा पूर्वाधिकरणे जीवब्रह्मभेदः सूत्रैः सुदृढं सिद्धान्तितः तथाऽत्र निर्गुणत्वेन पराभिमतायां कठवल्ल्यां 'विशेषणात्' इति सूत्रेण तयोर्भेदः सिद्धान्त्यते । 'विशेषणं च विज्ञानात्मपरमात्मनोरेव भवति' इति श्रीशांकरभाष्यमिदं द्रढयति । द्विवचनेन श्रुतिश्च सूत्रं च उभयोरन्यत्वमेव निस्सन्दिग्धमुपदिशतिः । स्मृतिरपि 'अन्यश्च राजन् स परः स च अन्यः पञ्चविंशकः' इति परस्यान्यत्वमेवोद्घोषयति अभ्यासेन ।

विषयवाक्येऽत्तृपद नास्ति' सूत्रे अस्ति इति प्रदर्श्यते । अस्ति तत्र स्वारस्यम् । संहरणरूपप्रलयकर्तृत्वं अदनमिव सुलभं भवति । नाऽत्राऽऽयासलेशः । विश्वं च निगीर्णमिव कुक्षौ निक्षिप्यते । सर्वैःकर्मापि प्रविलाप्य मोचित मुक्तात्मानमनुभवति ब्रह्म । परस्परं तौ भोग्यत्वेनाऽनुभवतः । एनं मोक्षयित्वा एनं भोक्तुमेव हृदयगुहायामनेन सह प्रविष्टो देवः इत्यपि व्यज्यते । सृष्टिरनुप्रवेशः इत्येतत्सर्वं चेतनस्य संसारान्मोक्षणायैव । 'रथिरथादिरूपकल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति' इति भगवत्पाद-भाष्येणापीदं व्यञ्जितम् । ब्रह्मरसं पिबन्तु मुक्ति प्राप्ताः ब्रह्मापि शुद्धमुक्त-परिष्वंगेन रसं पिबतु उभावपि पिबन्तौ इत्याशयः । परस्पराविभाग-संश्लेषरसो मुक्तिरसः । स एव समन्वयः । उभयोरपि शुद्धानन्दरस-भोगः । मुक्तावेवोभयोस्सखित्वमन्वर्थं भवेत् । 'पिबन्तौ' इति श्रुतिश्चान्वर्थाभवेत् । तदा न छत्रिन्यायापेक्षा । नोपचारापेक्षा । अनश्नन्नपि परमात्मा मुक्तं परमादरेणाश्नाति । पत्रं पुष्पं फलं तोयं भक्त्या उपहृतमश्नात्येव सः । 'स महात्मा सुदुर्लभः' इति तद्वानम् । हनूमत्कुचेलादिभ्यो महाभागवतेभ्यः परिष्वंग एव दत्तः सर्वस्वत्वबुद्ध्या । 'एकस्मिन्नेव शरीरवृक्षे कृतपरिष्वंगौ' इति वार्तिकोक्तः श्रुत्यर्थः ।

'अत्ता' इति सूत्रपदेन अनश्नन्निति श्रुतिप्रसिद्धः ब्रह्मस्वत्राद्योधनात्ता इति रसोऽपि व्यज्यते । 'देहात् देहान्तरे............पतगाविव वृक्षाद्वृक्षान्तरे' इति वार्तिकं रहस्यम् । पक्षिमिथुनमिवेदमात्ममिथुनम् । हंसमिथुनमिवेति श्रीशुकप्रदर्शनं षष्ठस्कन्धे । 'एष मे आत्मा' इति ज्ञानी । ज्ञानीत्वात्मैव मे मतं इति वासुदेवो वदति ।

(५३) — 'आत्मद्वयविषयकत्वे हि कथं नाद्वैतविरोधः' इति साहस्रीचोद्यं दुष्परिहरमेवेति पूर्वमेव निरूपितम् । 'वाच्यलक्ष्य जीवद्वैविध्यस्यैव जीवपरमात्मरूपत्वात्' इति साहस्रयुत्तरमुपहास्यम् । आत्मद्वैविध्यमुक्तं सूत्रेण श्रुत्या च । तयोर्भेदनिश्चयेन द्वित्वसंख्या च निर्धारिता । एकद्विसंख्ययोर्भेदो नास्तीति को वा वदेत् ।

(५४१) — सिद्धान्ते अत्तापरमेश्वरः, तदधिष्ठानं निर्विशेषचैतन्यमिति साहस्रयुक्तिर्न क्षणमात्रक्षोदक्षमा । 'अत्तापरमेश्वरः' इत्यभ्युपगमे चात्र परमेश्वरे एव समन्वयः सूत्रकृता क्रियते इति स्पष्टमभ्युपगतं भवति । तेन च स्वाभिमतनिर्गुणवाक्येष्वपि सगुणब्रह्मण्येव समन्वयं निरूपयति सूत्रकारो न निर्गुणे इति स्पष्टीभवति । सूत्रशास्त्रबाह्यः तत्प्रतिषिद्धश्च निर्गुणवादः ।

अत्ता खल्वोदनाद्यैर्भवभुगिति कठश्रुत्यधीतोप्यसौ
स्यान्नस्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रासनस्तल्लयोक्तेः ।
जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु
प्रेर्यत्वप्रेरकत्वप्रतिनियतरसाच्छत्रिनीत्याथवास्यात् ॥

भोक्तृत्वं नास्ति परमात्मनः इत्युक्तं संभोगप्राप्तिसूत्रेण । कठवल्ल्यां ओदनमन्त्रे भूयोदनात्तृत्वमुक्तम् । ओदनादेरत्तृत्वेनोक्तो जीव एव भवेदिति उत्थानं पूर्वपक्षस्य । 'अत्ता खलु' । सौत्रपक्षपदेनैव श्लोक उपक्रमते । 'खलु' इति सर्वलोकप्रसिद्धिः सूच्यते । यथा सर्ववेदान्तेषु ब्रह्मकारणत्वेन प्रसिद्धम्, तथा जीवः अत्तृत्वेन सर्वत्र प्रसिद्धः

इति रसो व्यज्यते । 'ओदनादेः' ओदनस्य स्पष्टनिर्देशात्, मुख्यमेवात्तृत्वं भवेत्, न औपचारिकमिति भावः । आदिपदेन उपसेचनभूतमृत्युर्गृह्यते ।' 'मृत्युर्धावति पञ्चमः' इति भीषास्वस्य धावनं चरमं वदन् मृत्युरुपदेष्टास्वस्यामुख्यत्वमेव विनयेनाभिप्रैतीति रसो व्यज्यते। आदिशब्दोपि अत्तारमदनसाधनमुपसेचनं वक्तुं समर्थः । 'ओदनादिः'। ओदनादनसाधनमुपसेचनं मृत्युरोदनादिः ब्रह्मक्षत्रादिसंहारकः, तस्याप्यत्ता परमात्मैव भवेदित्यपि रसः सिद्धान्तोपन्यासे । 'भवभुक्' संसारिणामेवौदनात्तृत्वसंभवः । कर्माधीनभक्षणं तस्यैव । "इति कठश्रुत्यधीतोऽपि" । अत्तेति सौत्रपदस्य 'ओदनमन्त्रविवक्षितः अत्ता' इत्यर्थः । 'कठश्रुतिः ओदनमन्त्रः । तन्मन्त्राधीतः पक्षः इति व्यज्यते । 'असौ स्यात्' जीवः स्यात् । जीवं प्राप्यासव्यावर्त्यते । जन्मादिलक्षणस्यान्ययोगव्यवच्छेदः क्रियते । अतिव्याप्तिवारणं क्रियते । 'मृत्यूपसिक्तस्थिरचरग्रासतस्तल्लयोक्तेः' आद्यस्य मृत्यूपसिक्तत्वोक्तिगृहीतनिखिलचराचरत्वात् जीवो व्यावर्त्यते । अदनं च संहर्तृत्वरूपप्रलयकर्तृत्वम् । अत्र ग्रासशब्दप्रयोगरसः अनुभाव्यः । अन्नग्रासवत् निखिलं समृत्युकं प्रपञ्चं निगिरति ब्रह्म' निखिलचराचरग्रहणेन सर्वे संसारि जीवाः ग्रस्यन्ते इत्युच्यते । सूत्रग्रहणशब्दस्याप्यर्थद्वयं स्यात् । ग्रहणं प्रतीतिः । 'गृहीत इव केशेषु मृत्युना धर्ममाचरेत्" इत्यादाविव कालरूपिणा भगवता प्रलये ग्रहणमपि गृह्येत । "मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीयमानत्वत् ब्रह्मक्षत्रयोश्च प्राधान्यात् प्रदर्शनार्थत्वोपपत्तेः" इति श्रीशङ्करभाष्यभाषितरीत्या मृत्यूपसिक्तत्वोक्तेः ओदनत्वेन निर्दिष्टयो 'ब्रह्मक्षत्रयोः कृत्स्नचराचरोपलक्षकत्वं ग्राह्य" मिति भावः । 'तल्लयोक्तेः' इति पूर्वाधिकरणोक्ततल्लत्वद्योतनं क्रियते । अत्तृत्वस्यार्थो निरूप्यते । सर्वोपप्रलयेन मुक्तं कृत्वा स्वस्मिन्नविभागसंश्लेषरूपैकीभावरूपलयं कांक्षति ब्रह्म इति कथंचिद्व्यज्यत इव । 'जीवव्यावर्तनं च प्रकरणविहितं' अनेन 'प्रकरणाच्च' इति सूत्रार्थः उच्यते । सूत्रे भाष्ये च चशब्दप्रयोगमनुसृत्यात्र च शब्दः । प्रथमे सूत्रे जीवलिंगत्वेन

पूर्वमुपन्यस्तं परमात्मलिंगत्वेन योजितम् । प्रकरणाच्चात्र प्रकरणिनो जीवव्यावृत्तिः स्पष्टेत्युच्यते । 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति', 'यमेवैषः वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनू' स्वाम्, इति जीवेनोपास्यस्यस्वप्रसादेन जीवं मोक्षयितुः परस्य प्रकरणमिदम् । पूर्वाधिकरणविषयोक्तौ कर्मकर्तृव्यपदेशशब्दविशेषहेतू जीवदृढव्यावर्तकौ अत्रापिस्तः इति भावः । 'निचाय्यत्वाय' इति पूर्वाधिकरणे सूत्रे उक्तम् । अत्र स्वप्रसादेन स्वस्वरूपसाक्षात्कारदानरूपफलंलाभो द्योत्यते प्रकरणपठितनायमात्मामन्त्रज्ञापनेन । हृदयगुहायां जीवेनात्मना सह प्रवेशश्चेत्थं प्रसादं कर्तुमेव । 'भोक्तृतोऽस्तिर्द्वयोस्तु' । 'ऋतं पिबन्तौ' इति कर्मफलभोक्तृत्वस्पष्टलिंगात् जीवपूर्वपक्षस्य पुनरुत्थानम् । जीवस्तावत् पिबति, ईश्वरस्तु पाययति, पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात्' इति श्रीशांकरभाष्यभाषितवत् द्विवचनस्य गतिः प्रदर्श्यते 'प्रेर्यत्वप्रेरकत्वप्रतिनियतरसा' इति । एकस्य नियमनरसः अन्यस्य कर्मफलपानरसः । 'अन्या गतिः छत्रिन्यायः । 'विशेषणाच्च' इति सूत्रेण जीवब्रह्मभेदः तयोरुपास्योपासकभावः, प्राप्यप्राप्तृभावः अनुग्राह्यानुग्राहकभावः, नियन्तृनियन्तव्यभावः, इत्यादिकं स्पष्टं संगृह्यते । पूर्वाधिकरणश्चात्र भेद एव सुदृढं सिद्धान्त्यते । अत एव श्रीदीक्षितैः अत्तृगुहाधिकरणे सगुणविद्या-सगुणब्रह्मपरत्वेन निर्णीते परिमले आर्जवमनुरुध्य । 'त्रिपादस्यामृतं दिवि' 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु' इति विश्वतः प्राकृतात्स्थानात् परं विष्णोः परस्थानमेव हि संसाराध्वनः पारभूतं मुमुक्षुभिः प्राप्यं 'परमं पदं सदापश्यन्ति सूरयः' 'तदक्षरे परमे व्योमन्' 'क्षयन्तमस्यरजसः पराके' 'विश्वं पुराणं तमसः परस्तात्' 'ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्याः सन्तिदेवाः 'इत्यादिसकलोपनिषत्प्रसिद्धम्' इत्यत्र वेदान्तसारः । यं एभ्योलोकेभ्य उन्निनीषते' इत्युक्तं प्रातर्दनवाक्ये

'एतमितः प्रेत्य अभिसंभवितास्मि' इत्युक्तं शाण्डिल्यवाक्ये । यमेवैष वृणुते तस्य विवृणुते तनूं स्वां, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं इत्युक्तं कठवल्ल्याम् । 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति कठवल्ल्यन्ते ब्रह्मविदः उत्क्रान्तिरुक्ता । उत्क्रान्तस्य परमपदप्रापिका सर्वोपनिषत्प्रसिद्धा अर्चिरादिगतिरुच्यते अनन्तराधिकरणे श्रुतिसूत्राभ्याम् । इमे सर्वे अंशाः सर्वोपनिषत्प्रसिद्धाः । अधिकरणानामित्थं क्रमिकत्वं रस्यम् ॥

## अन्तराधिकरणम् ।

विज्ञानमयजीवान्तरः सर्वशरीरी आनन्दमयः आत्मा आनन्दमयाधिकरणे प्रतिपादितः । आदित्यजीवान्तरस्तन्नियन्ता परमात्मा अन्तरधिकरणे प्रतिपादितः । जाठरान्तरः अमृतत्रिपाद्विभूतौ दीप्यमानः परमात्मा ज्योतिरधिकरणे । प्राणशरीरकः सुरनायकेन्द्रशरीरकः अमृतानन्दस्वरूपः इन्द्राद्यन्तरात्मा इन्द्रप्राणाधिकरणे । उपासकशाण्डिल्याद्युपासकभक्ताऽन्तरात्मा सर्वत्रप्रसिद्धोपदेशाधिकरणे । गुहामन्त्रेण हृदयगुहायां जीवात्मना सह तन्नियन्तृत्वेन तद्रक्षणायान्तरवस्थितः परमात्मा । तत्र कठोपनिषदन्ते तद्विद्यानिष्ठस्य अध्वपारभूतविष्णुपरमपदप्राप्त्यर्थं ब्रह्मनाडीद्वारा उत्क्रमणं प्रदर्शितम् । अत्राक्ष्यन्तरपुरुषस्य उपकोसलविद्याप्रतिपादितस्य परमात्मत्वं निर्णीयते । ब्रह्मणः कल्याणगुणाश्च परमादरेण प्रदर्श्यन्ते । अनन्तराधिकरणे शारीरकशास्त्रसारभूतं शारीरकब्रह्मणप्रतिपादितं भगवतः सर्वान्तर्यामित्वं चेतनाचेतनवैलक्षण्यञ्चोपदेक्ष्यन्, अत्र 'स्थानादिव्यपदेशाच्चे' ति तद्ब्राह्मणमधिकरणं चावतारयति । अत्र प्रतिपादितब्रह्मणः असंगस्वभावस्यामृतत्वादेश्च स्पष्टमुक्तत्वात्, तेषां च निर्गुणसूचकत्वाभिमतेश्च, अस्मत्सुहृत् साहस्र्यां 'अत्र सगुणवाक्यं निर्गुणब्रह्मपरमेव न सगुणब्रह्मपरं' इति नूतनतया सर्वपूर्वग्रन्थविरुद्धतया प्रदीपादि स्वग्रन्थविरुद्धतया च वदति ।

(४५६) प्रश्ने "अत्र सगुणं ब्रह्मविवक्षितं उत निर्गुणम्, आद्ये अमृतत्वाभयत्वदृश्यमानत्वादिविरोधः । द्वितीये तु गतिप्राप्यत्वाद्यनुपपत्तेः ।" इति परिचोद्य, सगुणपरत्वं परित्यज्य निर्गुणपरत्वं निर्धारितम् । एतत्पादारंभे प्रदीपे तुरीयस्यास्याधिकरणस्य सगुणपरत्वं स्पष्टं निर्धारितम् । स्वव्याघातैकरसिकः साहसीकृत् । स्वोत्थापितस्य प्रश्नस्यासमाधेयतां पश्यन्नेव इत्थं स्वव्याघाते मज्जति । 'अथवा सगुणमेव निर्गुणं' इत्यनन्तरं गत्यन्तरं धावति । यदि वस्तुतः अनन्तगुणस्यैव निर्गुणमिति विपरीतलक्षणया नाममात्रं, वाढं तथैवास्तु इति वदामः । कानो हानिः । 'विवक्षितगुणोपपत्तेश्चे'ति सूत्रेण यथा वह्वद्भुतगुणाः अपूर्वतया प्रतिपादिताः तथाऽत्र 'उपपत्तेः' इति प्रथमसूत्रहेतुना वह्वद्भुतगुणविशिष्टत्वं ब्रह्मण उपपाद्यते । "एष ह्येव वामनीः', 'एष ह्येव भामनीः, 'एतं संयद्वामः इत्याचक्षते", "यद्वावकं तदेव खं, यदेव खं तदेव कं", 'एष हि सर्वेषु लोकेषु भाति" इत्यादिकं गुणवर्णनं दृश्यते । "आनन्दो ब्रह्म' इत्यादिकमपलभ्य यदि कश्चित् आनन्दमात्रं ब्रह्म नानन्दगुणविशिष्टं इति ब्रूयात् । स निरस्यते 'सुखविशिष्टाभिधानादेव च" इति सावधारणस्पष्टसूत्रेण 'एष आकाश आनन्द' इति तत्रोक्तम् । अत्र 'कं ब्रह्म खं ब्रह्म' इति । निरवधिकानन्दविशिष्टं ब्रह्मेति स्पष्टं सूत्रकारनिर्णयः । 'आकाश आनन्दः' इति श्रुतेरप्ययमेवार्थ इति प्रदर्श्यते सूत्रकृता । "अक्ष्यन्तरः परमात्मा उपपत्तेः तदसाधारणधर्मवत्त्वादिति सूत्रार्थः" इति प्रदीपोक्तः प्रथमसूत्रार्थः । तच्च ब्रह्मणः वहुगुणविशिष्टतामेव दृढं साधयति, निर्गुणब्रह्मसद्भावाभिमानं च व्यपोहति । "उपपत्तेः उपपद्यते हि गुणजातमिहोपदिश्यमानं, संयद्वामत्वादिगुणोपदेशाश्च तस्मिन्नेव कल्पते । तस्मात् विवक्षितधर्मजातोपपत्तेरक्ष्यन्तरः परमेश्वरः । तस्मात् गुणविधानार्थं पूर्वोपक्रान्तसुखविशिष्टं ब्रह्मैवात्र सर्वनामभ्यां (य एषः इति) परामृश्यते" इति वार्तिकम् । 'विवक्षितगुणोपपत्तेः' इति प्रथमाधिकरणसूत्रार्थ एव 'उपपत्ते'रिति हेतोरर्थ इति स्पष्टम् । सर्वत्र वेदान्तानां ब्रह्मगुणविवक्षामेव वदति सूत्रकारः । "अत्र आत्मत्वामृतत्वाभयत्वासङ्गत्व-

सम्यद्वामत्ववामनीत्वभामनीत्वार्चिरादिमार्गप्राप्त्यादीनि ब्रह्मलिङ्गानि" इति प्रदीपोक्तं समीचीनमेव। सगुणब्रह्मलिङ्गानि वा स्वाभिमतनिर्गुणब्रह्म-लिङ्गानि वा इति स्वयमेव आलोचयतु साहस्रीकृत्। निर्गुणलिङ्गानि चेत् 'सुखविशिष्टाभिधानादेव च' इति सूत्रेण, तत्सूत्रस्य स्वमतभाष्येण च वस्तुतः सगुणस्यैव निर्गुणमिति पारिभाषिकं नामेदं च भवेत्। पूर्ण-निष्ठावन्तं ब्रह्मविदं 'अथ यदु चास्मिन् शव्यं कुर्वन्ति यदु च न अर्चिषमेवते अभिसम्भवन्ति" इत्यत्र 'अस्मिन्' शब्देनानूद्य तस्य एतद्ध्यान्वयरूपं महाफलं कीर्त्यते परममाङ्गलिकत्वेन अथ शब्देनोपक्रम्य। शव्यं कुर्वन्तु वा मा वा बान्धवाः। विश्वबन्धुर्भगवान् मृतं ब्रह्मविदं दीप्तेन मार्गेण देवैः आनन्दविभूतिं नयति। निर्गुणनाम्नो विपरीतलक्षणयोपपत्तिरन्वेष्टव्या। निर्गुणशब्दस्य प्राकृतगुणराहित्यार्थकत्वं बहुप्रमाणसिद्धं भगवत्पाद-भाष्यादिसिद्धं च इति विस्तरेण निरूपितमस्माभिः। 'श्रुतोपनिषत्क-गत्यभिधानाच्चे' ति सूत्रस्य साहस्र्युक्तार्थः उपहास्यः सर्वपूर्वव्याख्या-विरुद्धश्च। 'श्रुता अनुष्ठिता उपनिषत् रहस्यं सगुणब्रह्मोपासनं येन तस्य या गतिः श्रुतौ स्मृतौ च प्रसिद्धा, तस्या अभिधानात् लिंगात् इति सूत्रार्थः' इति रत्नप्रभया शमं लभतां साहस्र्याग्रहः। निर्गुणब्रह्म-साधकः खल्वयं हेतुः साहस्री बुद्ध्या। तिष्ठतु सूत्रम्। एतद्विद्यायामेव मोक्षगतिः फलत्वेन विद्यासंबन्धित्वेन च स्पष्टं श्रूयते। न केवलं स्पष्टसूत्र-विरोधः श्रुतिविरोधश्च। 'य एवं वेद' य एवं वेद इति एतद्विद्यायां जीव-त्वेनाभिमतस्य कार्यस्य ब्रह्मणः उपासनेन अर्चिरादिगतिद्वाराविलंबेन मुक्ति-प्राप्तिकथनमपि न समीचीनम्। जीवोपासनेन मोक्षफलं कथं प्राप्यते। 'इष्टं हि सुखस्यापि गुणस्य गुणिवत् ध्येयत्वं' इति भगवत्पादभाषितमनर्घं वाक्यं सर्वैः श्लाघनीयम्। आनन्दमयविद्यायामानन्दगुणस्याप्युपासनं विहित-मिति विस्तरेण निरूपितमस्माभिः। तदेवोच्यतेऽत्र भगवत्पादैः। 'गुणं कमपि वेत्ति वा तवगुणेशगोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम्' इति वेदान्ताचार्याः इदमेवाऽगायन्। आनन्दगुणस्यात्र ध्येयत्वात्, आनन्दमयविद्यायामिवात्र भयाभावः फलत्वेन सूच्यते ब्रह्मणः

अभयत्वकीर्तनेन । शास्त्रनिगमनान्ते चेमां विद्यां ज्ञापयति सूत्रकारः अनावृत्तिः शब्दादित्यभ्यसनेन । 'नावर्तन्ते नावर्तन्ते' इत्यत्रानावृत्ति-रूपपरममोक्षाभ्यासिकीं श्रुतिं ज्ञापयन्नेवाचार्यः शास्त्रं समापयति । अन्यच्च । उपासनादपि अव्यवधानेन ब्रह्मप्राप्तिहेतुभूतायाः गतेरभ्यर्हिततरत्वं अत्र-ज्ञाप्यते गत्युपदेशस्याचार्यकृत्यत्वेनाग्निभिः परिशेषणेन । "आचार्यस्तु ते गतिं वक्ता" इति गत्युपदेशपरिशेषः कृतः आचार्यस्य । तुशब्देन तदुपदेशस्य उत्कृष्टतरत्वं द्योत्यते । आचार्य एव वक्ता न वयं इत्यव-धारणार्थकत्वञ्च । गतेः फलकोटिप्रविष्टत्वं फलस्याव्यवहितसाधनत्वञ्चा-भिप्रेत्य तस्य प्रत्येकं एकेन पूर्णेन पादेनान्तिमपादात्पूर्वं वर्णनं कृतम् ।

अन्यच्च अत्र पाप्माश्लेषादिफलं इहैव भवत्सानन्दं गीयते श्रुत्या । तच्च फलं 'तदधिगमसूत्रन्यायेन ब्रह्मविद्यानिष्ठस्यैव भवेत् । तदधिगमे ब्रह्म-ज्ञाने सति' इति भामती । इदमेवोपकोसलवाक्यमुदाहृतं तत्र श्रीशांकर-भाष्ये । तत्र यो विद्यानिष्ठो ब्रह्मवित् अश्लेषफलभागुच्यते, स एवात्र श्रुतोपनिषत्क इति सूत्रपदेन विवक्षित इत्यत्र कः सन्देहः । इत्थं वेदान्त-शास्त्रमपार्थवर्णनेनाकुलीकरोति साहसीकृदिति महदिदं शोकस्थानं वेदान्तिलोकस्य ।

(सा) यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूयमाणोऽस्तु जीवो
यद्वाक्ष्णोर्दैवतार्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।
एतद्ब्रह्मैव देवामृतमभयमिदं कं खमित्याद्यधीते
स्सम्यद्वामत्वमुख्यैः स्थितिनियतिबलाद्यर्चिराद्युक्तितश्च ॥

'पूर्वाधिकरणेऽप्युपासकस्य गुहान्तर्वर्ती परमात्मा निरूपितः इदानीमुपासकस्य चक्षुर्वर्ती परमपुरुषो निरूप्यते इति संगतिः' इति चिन्तामणिः । 'जगत्प्राणयितृत्वेन प्राणविशिष्टं यद्ब्रह्मतद्देशापरिच्छिन्न-सुखरूपं चेत्यग्नयः उक्तवन्त इत्यर्थः' इत्यस्मदुपनिषद्भाष्यम् । 'को ह्येवा न्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' इत्यानन्दमयविद्या श्रुतिसमानार्थेयं श्रुतिः । उभयत्र सुखविशिष्टाभयब्रह्माभिधानमेव

स्पष्टी क्रियतेऽत्र । 'आनन्दादयः प्रधानस्ये' ति सूत्रेण ब्रह्मण आनन्दमयत्वस्य सर्वासु विद्यासूपास्यत्वं वक्ष्यते । निरतिशयानन्दधर्मस्योपासनेन उपासनदशायामेव सर्वभयनिवृत्तिः सूच्यते । 'य एषोऽक्षिणि पुरुषः इति श्रूयमाणः ' इत्यत्र सूत्राभिप्रेतपक्षप्रदर्शनम् । अक्षिणि पुरुषः अक्ष्यन्तरः पुरुषः । 'यद्वत्तादेः ' इति हेतुः । ब्रह्मभिन्नं जीवादिकं यत्किमपिसाध्यम् । सर्वथा माभूत् ब्रह्मेत्याशयः । 'य एषोऽक्षिणि पुरुषो (दृश्यते) इति यद्वृत्तहेतुस्फोरकत्वमस्ति पक्षनिर्देश एवेति द्योत्यते । 'एष आत्मा ' इति वाक्यखण्डः जीवपक्षसाधकः । 'दृश्यते ' इत्युक्तिरपि अदृश्यपरोक्षब्रह्मनिरासिका । आदिशब्देन तद्ग्रहणमिष्यते । अक्षिस्थानान्तर्वर्तित्वं च ब्रह्म संभवीति पूर्वपक्ष्यभिमानः । इयं च शंका प्रत्युच्यते 'स्थानादिव्यपदेशाच्चेति सूत्रेण । 'स्थितिनियतिवलात् ' इत्यत्र तत्सूत्रसंग्रहणम् । सूत्रे आदिशब्देन नियमनस्य ग्रहणमिष्यते'। 'यश्चक्षुषि तिष्ठन् यश्चक्षुषोऽन्तरो यमयति ' । अन्तर इत्यत्र पक्षनिर्देशेनापि अन्तर्यामिब्राह्मणं कथंचित् स्मार्यते । 'यद्वाक्षणदैवतार्कः । 'आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत् ' इति श्रुतिस्मारणाय द्विवचनप्रयोगः । अन्तरादित्यविद्यायां यथा आदित्यदेवताशङ्का, तथात्रापि । 'स्गनादिव्यपदेशाच्च' इति सूत्रस्मारितशारीरकब्राह्मणेनाऽऽदित्यव्यावृत्तिरपिलभ्यते । आरंभप्रभृत्येव सूत्रकारः पुनः पुनः शारीरकब्राह्मणं स्मारयति शास्त्रस्य शारीरकत्वात् । कात्स्न्र्येन तद्ब्राह्मणमनन्तराधिकरणे विचार्यते । अनन्तरादृश्यत्वाधिकरणे 'रूपोपन्यासाच्च' इति सूत्रेण विश्वशरीरत्वं हेतू क्रियते ब्रह्मलिंगत्वेन । अनन्तरवैश्वानराधिकरणं स्वर्लोकादित्यवाताम्बरादिशरीरं वैश्वानरं ब्रह्म उपपादयति । 'स्मर्यमाणमनुमानं स्यादिति' इति सूत्रं चं तदुपपादकम् । 'प्रतिकृतिरथवा तत्र दृश्या ' । प्रतिबिंबभूताक्षि पुरुषस्य शङ्कात्रोपपाद्यते 'य एषोऽक्षिणि दृश्यते ' इति पुरतः प्रत्यक्षतो दृश्यमानत्वस्य स्पष्टनिगदेन । 'तत्र दृश्या ' इत्यस्य 'अक्षिणि दृश्यते प्रत्यक्षं इत्यर्थः ' । प्रत्यक्षदर्शनोक्तेर्न तत्पक्षस्यासम्भावना शक्या । 'वचनस्य नातिभारः किं नाम वचनं न कुर्यात् ' इति न्यायावलम्बः ।

'य एष इति निर्देशः प्रत्यक्षेयं प्रयुज्यते। परोक्षं ब्रह्म न तथा प्रतिबिंबेऽस्ति संभवः।" इति भामती। 'एतद्ब्रह्म' इतीदं सिद्धान्तप्रतिज्ञावाक्यत्वेन ग्रहीतुं शक्यम्। एष इति निर्दिष्टो न जीवादिः, किन्तु ब्रह्म। विधेयब्रह्मानुगुण्येन 'एत' दिति क्लीबप्रयोगः। 'एतदमृतमेतदभयमेतद्ब्रह्म' ति वाक्ये 'एतद्ब्रह्मे'ति चरमखण्डः एतस्य ब्रह्मत्वेन निगमनवाक्यम्। तद्वाक्यं चरमपठितमपि अत्र सिद्धान्तप्रतिज्ञात्वेनोपादीयते। 'एतदेव' इत्यनेन 'एतदमृतमभयं' इति श्रुतिर्गृह्यते। एवकारः अवधारणार्थद्योतकः। अस्मिन्नेवामृतत्वाभयत्वादिकमुपपद्येत। अमृतत्वं न प्रतिकृतावुपपद्येत। ब्रह्मशब्दश्च परमात्मन्येवोपपन्नः। इदमितिपदेन 'एतद्ब्रह्मेति' यत् ब्रह्म उपुक्तं तदेवेदं 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति पूर्वोक्तमिति द्योत्यते। आदिशब्देन 'प्राणो ब्रह्म' इति वाक्यस्यापि ग्रहणम्। विश्वप्राणधितृत्वस्य ब्रह्मलिङ्गत्वप्रसिद्धिः पूर्वमेव साधिता। संयद्वामत्वमुख्यैः 'मुख्यशब्द आद्यर्थको मुख्यार्थकश्च।' वामनीत्वभामनीत्वे आद्यर्थकमुख्यपदगृहीते। संयद्वामत्वादिकं ब्रह्मण्येव मुख्यतया उपपद्येत। 'स्थितिनियतिबलात्'। 'यश्चक्षुषि तिष्ठन्' इति श्रुतिलब्धात् चक्षुष्यवस्थाननैयत्यात्" इति पदयोजना। 'अनवस्थितेः' इति प्रतिबिंबनिरासमूत्रे पठितम्। 'नियमेनानवस्थितेः' इति तदर्थः। ब्रह्म तु चक्षुषि नियमेनावस्थितमिति श्रुतिसिद्धमिति भावः। 'दृश्यते' इतिवर्तमाननिर्देशेन चक्षुष्यवस्थाननियतत्वं' इति चिन्तामणिः। 'अर्चिराद्युक्तितश्च' ब्रह्मनिष्ठानामेवासाधारण्येन प्रतिपाद्यमानार्चिरादिमार्गगमनस्यात्रोपदेशाच्च" इति चिन्तामणिः। 'अर्चिरादि' इत्यनेन 'अर्चिरादिना तत्प्रथितेः' इति सूत्रं स्मार्यते तन्मार्गस्य सर्ववेदान्तप्रसिद्धिद्योतनाय॥

स्वातन्त्र्योत्तंसिताशु श्रुतिषु न फलदस्यैव वेद्यत्ववादः
कल्याणालोकनादेरिव विधिबलतो वेदनस्यार्थवत्त्वात्।
तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे
सेयं पूर्वापरास्वप्यधिकृतिषु यथासंभवं नीतिरूह्या॥

'अनवस्थितेरसंभवाच्च' इति छायापुरुषपूर्वपक्षो निरस्तः सूत्रकृता । अत्यन्तासंभावितस्य कथं पूर्वपक्षणं युज्यते इत्याक्षेपस्य परिहारः उच्यते । प्रभुसंमिता श्रुतिः न यौक्तिकपर्यनुयोगार्हा । फलप्रदस्यैव वेद्यत्वोपास्यत्वद्रष्टव्यत्वादिकमुपदेष्टव्यं श्रुत्येति नियमो नास्ति । 'श्रुत्युक्तार्थे यथाश्रुति विश्वासः करणीयः । दर्पणदर्शनात् मंगलमिति श्रुत्योच्यते, तत्र किं नियामकं, श्रुतिस्वातन्त्र्यमेव' । 'एवमत्रापि मिथ्याभूतप्रतिबिंबोऽस्तु तद्दर्शनमेव फलं यच्छति, यथा दर्पणस्थस्यात्मप्रतिबिंबदर्शनात् मंगलावाप्तिः एवमक्षिपुरुषस्यैवोपास्यत्वे तदुपासनात् मंगलावाप्तिरिति सुसंगतमेतदिति' इति चिन्तामणिः । 'विधिबलात्' विधायकशास्त्रबलतः फलसिद्धिः । शास्त्रविधिश्च अदृष्टविधया फलं जनयति । तत्र कथं दृष्टप्रकारमवलंब्य चोदयितुमवकाशः । 'युज्यते पूर्वपक्षे' पूर्वपक्षस्य कथंचित्संभवः इत्युपपाद्यते । बहुष्वधिकरणेषु इत्थमेव पूर्वपक्षसंभवपरिपाटी भाव्या । इयं समाधानरीतिः शिवार्कमणिदीपिकायामपि प्रदर्शिता ॥

---

## अन्तर्याम्यधिकरणम् ।

सूत्रशास्त्रस्य शारीरकनाम्नोऽन्वर्थकत्वं' ब्रह्मणः चेतनाचेतननिखिलान्तर्यामित्वं, आत्मनामनात्मनां चाविशेषेण तं प्रति शरीरत्वं, तस्यामृतत्वरूपानन्दघनत्वं, तस्य नारायणत्वं च कथ्यन्तेऽत्र । जीवब्रह्मणोः अचिद्ब्रह्मणोश्च एकरूपतया शरीरशरीरिभावरूपसंबन्धः सूच्यते अत्र, यः सम्बन्धः बहुकृत्वोऽभ्यस्यते शारीरकब्राह्मणेन । ईक्षत्यधिकरणविषयवाक्यभूतसद्विद्यायां 'सन्मूलाः' इत्यारभ्य 'तत्त्वमसि श्वेतकेतो' इत्यन्तं वाक्यं नवकृत्वः अभ्यस्तम् । तत्र श्रुतिं सामानाधिकरण्यं शरीरात्मभावप्रकारप्रकारिभावसम्बन्धप्रयुक्तमिति स्पष्टीकृतं 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' इति तद्वाक्यपूर्वखण्डेन नवकृत्वः अभ्यस्तेन ।

'सर्वं खल्विदं ब्रह्म तज्जलान्' इति शाण्डिल्यश्रुताविव सन्मूलत्वसदायतनत्वसत्प्रतिष्ठितत्वैः 'ऐतदात्म्यमिदं सर्वं' मित्युपपत्तिपूर्वकं तत्र श्रावितम् । शाण्डिल्यश्रुतौ जीवब्रह्मणोर्भेदः सुदृढं साधितः सूत्रकारेण । 'एष मे आत्मा अन्तर्हृदये' इति श्रुतौ उपासकस्य जीवस्य 'शाण्डिल्यस्य मम एषः परमात्मा आत्मा अन्तर्यामी अन्तर्नियन्ता' इति स्पष्टमुक्तम् । तथैव प्रतर्दनविद्यायां 'एष म आत्मेति विद्यात्, इत्युक्तं उपदेष्ट्रा । सैव शास्त्रदृष्टिः । आनन्दमयविद्यायां तद्विद्यया प्रतिपादितस्य हृदि स्थितस्यादित्य जीवान्तः पुरुषैक्यं द्विरभ्यस्तम् । आदित्यजीवस्य ब्रह्मभेदः साधितःसूत्रकारेण 'भेदव्यपदेशाच्चान्यः' इत्येतदन्तर्यामिब्राह्मणोदाहरणेन । एतत्पूर्वभूतान्तराधिकरणे 'स्थानादिव्यपदेशाच्च' इति एतद्ब्राह्मणस्मारणपूर्वकं जीवव्यावृत्तिरुक्ता । 'तत्त्वमसि' इति यथाऽभ्यस्तं सद्विद्यायां, तथात्र 'स ते आत्मा अन्तर्याम्यमृतः' इत्यभ्यस्तम् । तत्र नवकृत्वः, अत्र त्रिसप्तकृत्वः । अत्र चान्तर्यामितो जीवस्य भेदः स्पष्टं निर्णीयते । शरीरात्मभावेन चिदचितोः ब्रह्मसामानाधिकरण्यनिर्वाहः इति स्पष्टीक्रियते एतद्ब्राह्मणेन । 'मिथो भेदं तत्वेष्वभिलपति भेदश्रुतिरसौ विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती । इमावर्थौ गोप्तुं निखिलजगदन्तर्नियमिता निरीशो लक्ष्मीशः श्रुतिभिरपराभिः प्रणिदधे' इति संकल्पसूर्योदयश्लोकोऽत्र भाव्यः । अस्य शारीरकब्राह्मणस्य ज्ञेयनिर्गुणप्रकरणत्वमुच्यते साहस्र्या । सगुणब्रह्मोपास्तिप्रकरणमित्यानन्दगिरिः । 'अन्तर्यामिब्राह्मणस्य सविशेषब्रह्मणि समन्वये उक्ताः संगतयः । सिद्धान्ते परस्यैवान्तर्यामिणः उपास्तिरिति फलमिति आनन्दगिरिटीका । ज्ञेयप्रकरणत्वनिर्धारणे शरीरशरीरिभावसत्यत्वस्य दृढसिद्धिः । तेन चास्मन्मतमेव प्रतिष्ठापितं भवति । 'अधिदैवादिष्वन्तर्यामी परमात्मा, उपदिश्यमानपरमात्मधर्मवत्त्वात् इति सूत्रार्थः' इति प्रदीपः । एतेनापि सगुणब्रह्मपरत्वमेव सिध्यति । आत्मभेदश्च काल्पनिकः न पारमार्थिकः इति वदन्प्रदीपः सूत्राक्षरैः श्रुत्यक्षरैश्च निरस्तः । अत्र अतत्वमुपदिश्यते श्रुत्यासूत्र-

कारेण च इति कथनमुपहास्यम् । भेदस्य काल्पनिकत्वं स्वकपोलमात्रकल्पितम् । वेदान्तपरिभाषा भूमिकायां प्रदीपकृतैव उपासनप्रकरणत्वमुक्तमस्य ब्राह्मणस्य । अन्तर्यामिब्राह्मणोक्तान्तर्यामिणो नारायणत्वं स्पष्टं भाषितं भगवत्पादैः ॥

अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनूक्तेः
नान्यो द्रष्टेति चोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यञ्च तत्तद्विषयघटितधीरूपमीशे हि मुख्यं
तद्धर्माः काण्वमाध्यन्दिनपठितिगतास्तस्य चात्माशरीरम् ॥

'अन्तर्यामी स जीवः' इति पूर्वपक्षिप्रतिज्ञावाक्यम्' । 'यः पृथिव्यां स ते अन्तर्यामी' इति बहुभिः पर्यायै 'यः यः' इत्यभ्यस्तः अन्तर्यामी पक्षः इति व्यज्यते स इति पदेन । 'सः अन्तर्यामी सः अन्तर्यामी' इति पुनः पुनः परमादरेण श्रुत्या निगदितः । 'करणायत्तधीवृत्त्यनूक्तेः' । अयमेकः पूर्वपक्षहेतुः । 'वाक्यशेषे' द्रष्टा श्रोता' इति करणायत्तज्ञानताश्रुतेः, एवं द्रष्टुरेवान्तर्यामित्वोपदेशात् 'नान्योतोऽस्ति द्रष्टा' इति द्रष्टृंतरनिषेधाच्च इति श्रीभाष्ये हेतुद्वयं भाषितम् । वाक्यशेषे 'द्रष्टा श्रोता' इति पठित्वा 'नान्योतोस्ति द्रष्टा' इति अतश्शब्देन अन्तर्यामिणमनूद्य तद्भिन्नतत्सदृशद्रष्टृन्तराभाव उक्तः । इदं व्यज्यते 'अनूक्तेः' इति । द्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्वानां शरीरकरणायत्तत्वं प्रसिद्धम् । यस्य इदं शरीरमस्ति स द्रष्टा इत्युक्तेः शरीरस्य करणद्वारा द्रष्टृत्वादिप्रयोजकत्वं प्रतीयत इव । 'शरीरकरणायत्तधीवृत्तिद्रष्टृत्वादिकमुच्यते' इति चिन्तामणिः । 'नान्यो द्रष्टेति चोक्तेः' । अथमपरः पूर्वपक्षहेतुः । 'नान्योतोस्ति द्रष्टा' इति साक्षादेव तस्माज्जीवादतिरिक्तस्य परमपुरुषस्य निषेधो दृश्यते ।' इति चिन्तामणिः । 'अतः' इति जीवपरामर्शं अभिमन्यते पूर्वपक्षिणा । "अतः करणायत्तधीवृत्तिमतो द्रष्टुः अन्यः ईश्वरादिः नान्तर्यामीत्युपपादनाच्च' इति पदयोजना । 'इति यदि' 'न' । एवं शंक्यते यदि, तदयुक्तम् । 'नियन्त्रन्तरस्य व्युदासात्' अनेन

द्वितीयहेतुप्रत्युक्तिः । अव्यवहितसन्निकर्षेण बुद्धिस्थत्वमुत्तरहेतोः । 'हि' इति श्रुतिपदेन श्रुतिबुद्धिस्थोऽन्तर्यामीतत्तदन्तरवस्थितस्तत्तन्नियमयन् द्रष्टा श्रोता मन्ता उक्तः । 'नान्योतोऽस्ति द्रष्टा' इत्यत्र अतः पदेन प्रकृतोऽन्तर्यामीनियन्ता द्रष्टा परामृष्टः । 'तस्मादन्यो द्रष्टा श्रोतामन्ता नास्ती' त्युक्त्या प्रकृतान्तर्यामिद्रष्टृसदृशद्रष्ट्रन्तरं व्युदस्यते । स्वसजातीयद्रष्ट्रन्तरव्युदासः । अयमन्तर्यामीस्वत एवकरणं विना द्रष्टा । 'पश्यत्यचक्षुः स शृणोत्यकर्णः' । 'न तस्य कार्यं करणं च विद्यते' 'स्वाभाविकी ज्ञानबलक्रिया च । एतस्य नात्योऽन्तर्यामी नापि एतदन्यः स्वतो द्रष्टा अस्ति । तस्य द्रष्टृत्वं चक्षुराद्यधीनम्, चक्षुष्ववस्थायतन्नियन्तुरन्तर्यामिणः अधीनश्च । 'यो वाचि तिष्ठन् यश्चक्षुषि तिष्ठन् यः श्रोत्रे तिष्ठन् यो मनसि तिष्ठन् यस्त्वचि तिष्ठन्' इति जीवकरणेषु परमात्मनः अन्तर्यामित्वेनावस्थितिनियमनादिकमत्रैवोपपादितम् । करणेषु परमात्माऽन्तर्यामित्वेनावस्थाय तानि नियच्छति । तेषु शक्तिमादधाति । जीवोपि स्वान्तर्यामिब्रह्मायत्तः । तत्करणान्यपि तदायत्तानि । ज्योतिराद्यधिष्ठानं तु तदामननात्' इति सूत्रश्रीभाष्यमिह भाव्यम् । चक्षुरादिकरणानां करणत्वं, जीवानां च दर्शनादिक्रियास्वन्तर्याम्यधीनत्वं चोपपाद्य अतः—ईदृशान्तर्यामितो निरूपाधिकद्रष्टुरन्यः एतादृशद्रष्टा नास्तीति श्रुतिहृदयम् । नियन्त्रन्तरस्य व्युदासात् । निरूपाधिकद्रष्टृश्रोतृमन्तृभूतैतदर्यामिणोऽन्यः एतादृशद्रष्टा नास्ति । 'एष ते जीवस्यान्तर्याम्यमृतः' इति शरीराख्यानपर्यायान् समाप्य 'अदृष्टोद्रष्टा' इत्यादिनाद्रष्टृजीवव्यावर्तनाय अदृष्टत्वविशेषितद्रष्टृत्वाधिकं निगदति श्रुतिः । जीवादन्तर्यामिब्रह्मणो वैलक्षण्यमधिकत्वं चात्यादरेण पुनः पुनर्वक्ति श्रुतिः । 'अदृष्टो द्रष्टा' इत्यादिकमुक्त्वा 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिकं वक्ति । अदृष्टत्वे सति द्रष्टुरस्मादन्यः ईदृशद्रष्टा नास्ति । इदमुक्त्वा पुनरपि "एष ते आत्मा अन्तर्याम्यमृतः अतोऽन्यदार्तं" इत्युक्त्वा उद्दालक उपरमति ।

उपक्रमप्रभृतिआन्तं श्रोतृजीवाद्भिन्नः तदन्तर्यामी अमृतः परमात्मेति पुनः पुनर्वक्ति । 'आर्तमित्यस्य पीडितं पीडायोग्यमित्यर्थः। आर्तस्य यथौपधम्' 'कामार्तानां,' 'क्षुधार्तः' 'तृषार्तः, आर्तत्राणाय वः शस्त्रम्', आपन्नार्तिप्रशमनफलाः सम्पदोह्युत्तमानां' इत्यादिकं भाव्यम् । तापत्रयभृशार्तानां जीवानां त्राणायैव परमात्मा अन्तर्यामितया आत्मन्यवतिष्ठते, तेन सह तद्धृदयगुहायां अनुप्रविष्टः तत्र तेन सह सदासन्, सोऽमृतः अनार्तः विजिघित्सः अपिपासः । 'अतोऽन्यदार्तं इति श्रुतेरयमर्थः। अतोऽन्यत् द्रष्टृ श्रोतृ मन्तृ आर्तम् । सर्वान्तर्यामिणः एतस्मादन्यत् द्रष्टृ श्रोतृ मन्तृ जीवतत्त्वं आर्तम् । एतेन द्रष्टृश्रोतृमन्तॄणां जीवान्तराणां सत्त्वं तेषामार्तत्वं अमृतपरमात्मभिन्नत्वं च स्पष्टं निगदितानि। 'अमृतं मा कुरु' इति यदा त्वमपेक्षसे सज्जोऽस्तिसः, तव यावदार्तिहरणेन त्वाममृतीकरणाय। इति श्रुत्युपदेशः । इदं निपुणं व्यज्यते 'यो रेतसि तिष्ठन्' इति रेतोन्तर्यामित्वस्य करुणाकाष्ठात्वेन चरमपठनेन। रेतसि जनिष्यमाणसंसारिणा सहावस्थानं करुणाकाष्ठा । रक्षणार्थमेव करुणाकाष्ठया सख्या जीवेन सह तत्र स्वयं तिष्ठति । न ततो विजुगुप्सते'। 'आपदि मित्रं विजानीयात्'। कोऽन्यः ईदृशसखा भवेत् । अनादिसखयं । रेतसि यदा जीवोऽवतिष्ठते तदा किमस्ति तस्य द्रष्टृत्वं श्रोतृत्वं मन्तृत्वं वा । तेन सह तत्रावस्थितेनाऽविनाभूतसख्या परमात्मैव सर्वद्रष्टा तस्य सर्वैकार्यनिर्वाहः। रेतसि वर्तमानन्चावस्थायां यथा परमात्मा एक एवाऽदृष्टो द्रष्टाऽस्ति, यथा तदधिष्ठितजीवस्य मननज्ञानादिकं नास्ति जीवस्य द्रष्टृत्वज्ञातृत्वादिसम्पत्त्यनन्तरमपि तद्वदेव परमात्माऽऽमननादिकं न्याय्यम्। 'महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया। प्राप्तं दुःखोदधेः पारंत्वरयावन्नभिद्यते'। आर्तपरितप्तं त्वामात्मवदमृतीकर्तुं सज्जोऽस्ति सर्वान्तर्यामी भगवानिति श्रुतेर्निपुणमुपदेशोरसिकलोकरस्यः । अस्य शारीरकब्राह्मणस्य, शारीरकशास्त्रजीवातुभूतैतदधिकरणस्य च निर्गुणपरत्ववादो निर्गुणः स दोषश्चेत्यत्र कः सन्देहः। " यथोल्बेनावृतो गर्भः

इति भगवद्गीतादृष्टान्तः इह भाव्यः । "अन्यशब्दसर्वनाम्नः पूर्वनिर्दिष्ट-सदृशान्यपरत्वस्य 'समानेषु पूर्वत्वा' दिति सप्तमिकाधिकरणे व्यवस्थित-त्वात्, अत्राप्यन्यशब्देन पूर्वनिर्दिष्टान्यत्वाद्द्रष्टृत्वादिविशेषितनिरुपाधिक-रूपादिसाक्षात्कारादिमतो निषेध उपपाद्यते । जीवस्य करणायत्तज्ञानत्वात् अन्यस्तत्सदृशोऽदृष्टो द्रष्टा नास्तीत्यर्थः ।' इति श्रीरंगरामानुजमुनयः । "दृष्टिरत्र चक्षुरिन्द्रियकरणिका बुद्धिवृत्तिर्विवक्षिता ।" इति वार्तिक-व्याख्या । प्रथमसूत्रोक्तः अन्तर्यामीति पक्षसमर्पकशब्दः उपक्रमवाक्या-दारभ्य 'नान्योतोऽस्ति द्रष्टा' इति चरमवाक्यपर्यन्तं पठ्यते । तेन चरमवाक्यमपि जीवव्यावृत्तजीवादिसर्वनियन्तृब्रह्मपरमिति प्रथमसूत्र-निर्णयः स्पष्टः । द्वितीयसूत्रे विशेषणपदेन 'अदृष्टो द्रष्टा' इत्यादि वाक्यं परामृष्टम । 'भेदव्यपदेशात्' इति हेतुपदेन 'स ते आत्मा अन्तर्याम्यमृतः' इति बहुकृत्वः पठितानि वाक्यानि परामृश्यन्ते । तृतीयसूत्रेण 'विज्ञानं' इति पदस्य जीवात्मशब्दपर्यायत्वप्रसिद्धिरवलम्ब्यते । स्थानप्रमाणमप्यत्र प्रमाणीक्रियते । आनन्दमयवाक्ये 'विज्ञानं यज्ञं तनुते' इति विज्ञान-मयाभिन्नत्वेन निगदितविज्ञानशब्दवाच्यविज्ञानमयशब्दितजीवान्दव्योऽ न्तरात्मा आनन्दमयः सर्वशारीरः सर्वान्तर्यामी परमात्मैवेत्येनेनापि स्पष्टी-क्रियते । "यो विज्ञाने तिष्ठन्" इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते । विज्ञानमयो हि शारीरः । तस्य शारीरादन्य ईश्वरो-न्तर्यामीति सिद्धं" इति शांकरभाष्यस्यार्जवैकान्त्यं शिरसा श्लाघनीयम् । "तद्धर्माः काण्वमाध्यन्दिनपरिपठिताः" । अत्र ब्रह्मणो धर्मबाहुल्यं जीवाद्भेदश्च परमादरेण भूयः पठ्यते श्रुत्या सूत्रकारेण च । 'तस्य च आत्मा शरीरं' । "यस्यात्मा शरीरं" इति श्रुतिपर्यायो ज्ञाप्यते । 'यस्य आत्मा च शरीरं' आत्मनोपि परमात्मनः शरीरं भवन्ति । अत एव जीवात्मनः स्वशरीरादिकं प्रति आत्मनो भवन्ति ; परमात्मानं प्रति तु ते शरीरं भवन्ति । परमात्मा तु न कस्यापि शरीरं भवति । ऐका-न्त्येन सर्वदा आत्मैव भवति । जीवात्मनां स्वस्वशरीरं शेषभूतम ।

परमात्मानं प्रति ते शेषाः। परमात्मा तु शेष्येव। 'जीवस्तु शारीर एव भवति' इति भगवत्पादाः। स्वक्षेत्रमात्रे क्षेत्रज्ञो जीवः, स्वशरीरभूतसर्वात्मसु सर्वक्षेत्रेषु च क्षेत्रज्ञः ईश्वरः। चेतनाचेतनं विश्वं सर्वान्तर्यामिणा आत्मवत्। तेन विश्वस्य ऐकात्म्यम्। 'समासेन च तद्व्यासः पुरुषैकात्म्यमुक्तवान्' इति स्मृत्या, 'ऐकात्म्यप्रत्ययसारं' इति श्रुत्या चेदं सर्वान्तर्यामिब्रह्मैकात्म्यं चेतनाचेतनविश्वस्य कथ्यते। 'न हि जीवस्य जीवः शरीरं भवितुमर्हतीति भावः' इति 'यस्य चात्मा शरीरं इति श्लोकखण्डस्यपदयोजना व्याख्यारस्या। अत्रोक्तस्यान्तर्यामिणो जीवात्मापि शरीरत्वेन स्पष्टं निगद्यते। कथं जीवस्यैव जीवात्मा शरीरं भवेदित्यमेघा युक्तिः। एतद्युक्तिप्रदर्शनायैव प्रवृत्तं तृतीयसूत्रम्। एतां युक्तिं परिहर्तुं 'यो विज्ञाने तिष्ठन्' इति काण्वपाठानुसारेण माध्यन्दिनैस्तत्स्थानपठितस्य 'आत्मशब्दस्य' विज्ञानरूपबुद्ध्यर्थकत्वं भवतु इति वक्ति। आत्मशब्दश्चैतन्यविशिष्टे जीवात्मनि स्वरसः। विश्वशारीरानन्दमयरूपसर्वान्तरात्मप्रतिपादकानन्दमयविद्यायां विज्ञानमयशब्दितः शारीरः स्वविषयश्लोके "विज्ञानं यज्ञं तनुतेविज्ञानं ब्रह्म चेद्वेद" इति विज्ञानशब्देनाभिलप्यते इति पूर्वमेवानन्दमयाधिकरणसूत्रैः साधितम्। तत्र विज्ञानविज्ञानमयशब्दयोः शारीरपरत्वं, विज्ञानमयादन्तरात्मत्वेनोक्तस्यानन्दमयस्य (आत्मनः) तद्भिन्नब्रह्मपरत्वं च निर्णीतम्। पूर्वसिद्धं तन्न्यायमुपजीव्यात्र माध्यन्दिनपठितविज्ञानशब्दस्य विज्ञानमयाख्यशारीरजीवपरत्वं साध्यते। इतरथा विनिगमनाविरहात् काण्वात्मशब्दः विज्ञानबुद्धिवाचको भवत्विति पूर्वपक्षयुक्तिरपरिहृतास्यात्। इदं निपुणमतिचारु व्यज्यते "य आत्मनि तिष्ठन् इत्यस्मिन्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीरः' इति तृतीयसूत्रशांकरभाष्येण। इदं स्पष्टं विक्रियतेऽनन्तरश्लोकेन सारावल्याम्। अस्य विषयस्यात्यन्तप्राधान्यं एतद्विषयमात्रे एकश्लोकगानेन व्यज्यते, सूत्रकारेण चैतद्विषयेपृथक्सूत्रनिबन्धनेन॥

स्थानैक्यादत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दौ
एकार्थावित्यकम्प्यं तदपि कथयतो बुद्धिमेवेत्यपार्थम् ।
लोकाम्नायप्रसिद्ध्योरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनापि नास्मिन् भवति च स त इत्यादिभिः सामरस्यम् ॥

'अत्र शाखाद्वयपरिपठितावात्मविज्ञानशब्दावेकार्थौ स्थानैक्यादिति (इदं) अप्रकम्प्य' मिति पूर्वपक्षी । उभयोरेकार्थत्वं सिद्धान्तिसंमतमेव । "कोसावेकोर्थः" इत्येव विवादः । पूर्वश्लोके काण्वमाध्यन्दिनशाखाद्वयपरिपठिता ब्रह्मधर्मा हेतूकृताः अन्तर्यामिणो ब्रह्मत्वसाधने । "तस्य हि परमात्मनो धर्मा इह निर्दिश्यमानाः दृश्यन्ते" इति शांकरभाष्यं प्रथमसूत्रहेतुव्याख्यात् । का प्रत्याशाऽस्ति श्रुतौ वा सूत्रेषु वा निर्धर्मकनिर्विशेषब्रह्मपरत्वगवेषणे । स्थानैक्यादिति श्रीशांकरभाष्यसंमतो हेतुः सूत्रकृदभिप्रेतश्च । 'तदपि' 'स्थानैकार्थ्यमवश्यकर्तव्यमंगीकृत्यापि' इति पदयोजना । 'कथयतो बुद्धिमेव' उभावपि शब्दौ बुद्धिमेव कथयतः इति पूर्वपक्षः । 'इत्यपार्थम्' इदमपार्थम् । 'लोकाम्नायप्रसिद्ध्योः' लोकवेदप्रसिद्ध्योरनुगमतः—लोकवेदप्रसिद्ध्यनुस्यूतिवलात् इति हेतुः । 'शास्त्रस्थावातन्निमित्तत्वात्' इति न्यायेन वैदिकप्रसिद्धेः वेदार्थनिर्णये सन्निकर्षाधिक्यमुक्तम् । लोकप्रसिद्धिर्वेदप्रसिद्धिरित्युभयमप्यस्ति । सा च प्रसिद्धिरनुस्यूततयाऽत्र प्रचुरप्रयोगसिद्धा । 'आत्मा यत्ने धृतौ जीवे', 'आत्मा तु स मकारेण पंचविंशः प्रकीर्तितः', 'आत्मानं रथिनं विद्धि', 'विज्ञानं यज्ञं तनुते', 'विज्ञानघन एव', 'विज्ञानात्मा' इत्यादिलोकवेदप्रसिद्ध्यनुस्यूतिवलात् एतौ शब्दौ चेतनैकवर्तिनाववगम्येते हि' इति पदयोजना । लोके आत्मशब्दस्य चेतने प्रसिद्धिः तत्रैव भूरिप्रयोगो दृश्यते । देहात्मवादिनश्चेतनमेवात्मानं मन्यन्ते । देहात्मभ्रमवन्तोपि आत्मानं चेतनत्वेनैव गृह्णन्ति । आम्नायेऽपि तथैव प्रसिद्धिः । आत्मशब्दस्य चेतनवाचित्वमौत्सर्गिकम् । 'बाधः केनापिनास्मिन्' अस्मिन् प्रकरणेऽस्मिन्नर्थे उत्सर्गबाधहेतुः कोपि न दृश्यते । 'भवति च सत

इत्यादिभिस्सामरस्यम्' न केवलं बाधकाभावः, प्रत्युत चेतनार्थग्रहणे सन्त्यनुकूलहेतवः । 'स त आत्माऽन्तर्याम्यमृतः' इत्यत्र प्रतिपर्यायं पठ्यते । 'ते' इति सम्बोध्यचेतननिर्देशः स्पष्टो दुरपह्नवश्च । स च जीवात्मेतिस्पष्टम् । तस्याप्यात्मा पृथिव्यादिसर्वजगदात्मेत्यत्र श्रुतेरैदम्पर्यं स्पष्टम् । 'य आत्मनि तिष्ठन्' इति पर्याय यह्वात्मशब्दाः पठिताः । सर्वेऽपि चेतनवाचिनः । प्रथमात्म शब्दत्रयं जीववाचीति स्फुटम् । द्वितीयस्य इतरपर्यायेष्विव विश्वशरीरकपरमात्मवाचित्वम् । अत्र जीवपरमात्मभेदः त्रिः सप्तकृत्वोऽभ्यस्यते । चिदचित्प्रपञ्चस्य परमात्मशरीरत्वं च कृत्स्नेनापि ब्राह्मणेन स्पष्टं प्रतिपाद्यते । यथा अचेतनपृथिव्यादितः तदन्तर्यामिणो भेदः स्पष्टः सर्वाभ्युपगतश्च तथैव जीवात्मतोऽपि भिन्नत्वं परमात्मनस्सर्वैः प्रतिपत्तव्यमिति श्रुतेराशयः । 'सर्वं खल्विदं ब्रह्म,' 'सच्चत्यच्चाभवत्', 'ज्योतींषि विष्णुः भुवनानि विष्णुः ।' इत्यादिप्रमाणेषु ब्रह्मणश्चेतनैरचेतनैश्च सामानाधिकरण्यं दृश्यते । तादृशसामानाधिकरण्ये एकरूपतयाऽत्र हेतुरभ्यासेन प्रतिपाद्यते । सर्वत्रैकरूप्येण शरीरशरीरभावनिबन्धनं ब्रह्मणस्तदितरचेतनाचेतनसामानाधिकरण्यम् ॥

---

## अदृश्यत्वाधिकरणम् ॥

एतदधिकरणविषये सूत्रस्वारस्यादिकं विस्तरशः प्रतिपादितमस्माभिः सूत्रानुगुण्यसिद्धिविमर्शे । तत्रानुक्तानेव कतिचिद्विषयानत्र वदामः । पूर्वाधिकरणवाक्ये 'अदृष्टः अश्रुतः अमतः' इति सर्वान्तर्यामिणः अदृष्टत्वाश्रुतत्वामतत्वान्युक्तानि । अविदितः सः सर्वत्रान्तर्यामितयावस्थाय यमयतीति चोक्तम् । यथा पृथिव्यादीन्यचेतनानि तं स्वान्तर्यन्तारं न विदन्ति, तथा चेतनोप्यात्मा तं न वेद । 'न चैनमविदितो भुनक्ति' इति श्रुतिः । यद्यप्यविदितो नियमयति, तथापि नाविदितः

एनं जीवं मोक्षदानेन पालयेत् । यत्र बृहदारण्यके 'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ, अश्रुतं श्रोतृ, अमतं मन्तृ, अविज्ञातं विज्ञातृ, नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ" इति श्राव्यते, तत्र "यो वा एतदक्षरमविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्राव्यते । ब्रह्मवेदनं तद्दर्शनं विना नान्या गतिरयनाय । अत्र मुण्डके 'अद्रेश्यमग्राह्यं सुसूक्ष्मं भूतयोनिं धीराः परिपश्यन्ति' इति श्राव्यते । कस्तत्रोपायः । कथं तत्फलं लभ्यते । तद्भूतयोनिप्रसादेनैव स्वदर्शनमनुगृह्यते इत्यत्र तदुत्तमधर्मः उच्यते "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां" इति । तादृशो धर्मः परमोदारस्य मातापितृसहस्रेभ्योऽपि वत्सलतरस्य परमात्मन एव संभवेत् । 'धर्मोक्तेः' इति हेतुपदे निरुपपदधर्मशब्देनपरमात्मैकसंभावितोऽयं प्रकरणपठितो धर्मो गृह्यते । परमपुरुषवरणे च हेतुः 'धनुर्गृहीत्वौपनिषदं महास्त्रं' इति मन्त्रद्वयोक्तब्रह्मयोगेन लक्ष्यब्रह्मवेधनं । धीराः परिपश्यन्तीत्यत्र धीराः इति पदेन ईदृशलक्ष्यवेधनसमर्था धीराः प्रणवधनुषो गृह्यन्ते । अत्र सर्वगतस्य सर्वान्तर्यामिणः जगत्कारणत्वमपि श्राव्यते, "तथाक्षरात्संभवतीह विश्वम्', 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते, इत्यादिभिः । 'अनुप्रविश्य नामरूपे व्याकरवाणि', 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत्" इत्यन्तःप्रविश्यावस्थाननियमनादिरेव नामरूपव्याकरणरूपसृष्टिरिति व्यज्यते सूत्रकारेण, अन्तर्याम्यधिकरणानन्तरमेतदधिकरणनिवेशनेन । "तदव्यक्तमाह हि", 'अपि संराधने प्रत्यक्षानुमानाभ्यां' इति सूत्राभ्यामव्यक्तं ब्रह्मैव संराधनरूपभक्तियोगे व्यक्तीभवतीति वक्ष्यते । निचाय्यत्वाय यथा हृदयगुहान्तर्वसति, तथा योगसम्पत्तेः सर्वत्र निचाय्यत्वाय सर्वस्मिन्नन्तर्यामितया वसति । 'नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' । सर्वगतं सर्वत्र धीराः तत्प्रसादेन परितः पश्यन्ति । "तं सर्वगतं सर्वतः प्राप्य धीराः युक्तात्मनः सर्वमेवाविशन्ति" ब्रह्मैवेदं पुरस्तात् ब्रह्मपश्चात्

ब्रह्म दक्षिणतश्चोत्तरेण" इति गास्यते। स्वयमदृश्यत्वेपि कृपया आत्मानं सम्यक् विवृणुते प्रियतमभक्तेभ्यः इत्येतदुपनिपत्प्रतिपादितः परमात्मोत्तमो धर्मश्चारु 'प्रतिपादितः सकलपसूर्योदये 'सत्त्वोदग्रसमग्रमन्दथुभुवः सालम्बनध्यानतः शुद्धे चेतसि यद्यपि प्रभुरिहाऽदृश्यो दरीदृश्यते" इति। एष उत्तमधर्मो न प्रधाने वा जीवे वा संभवेत्। 'परमेश्वर एव भूतयोनिः। परमेश्वरस्य हि धर्मः उच्यमानो दृश्यते' इति भाषमाणं श्रीशांकरभाष्यमृजुतयात्र सगुणब्रह्मण्येव समन्वयं ब्रूते। अत्र प्रतिसूत्रं सगुणब्रह्मैव स्पष्टं निगद्यत इति निरूपितमस्माभिः। "तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः" इत्यत्रा योपासनमत्रोपदिष्टं, अदृश्यब्रह्मसाक्षात्कारसाधनत्वेन। 'आचार्योपासनमिति भगवतापि गीतम्। अयं धर्मोऽपि 'धर्मोक्तेः' इति सूत्रहेतुना गृह्यते॥

दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे सन्निकर्षात्
पश्चम्युक्ताक्षरं तत्तदवधिकपरः पञ्चविंशोऽस्तु माभूत्।
सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धम्
पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः॥

अत्र नञिवयुक्तन्यायेन पूर्वपक्ष इति न्यायरक्षामण्यादिप्रदर्शितं विस्तरेण प्रकाशितमस्माभिस्सूत्रानुगुण्यसिद्धिविमर्शे। अत्र प्रथमपादेन तन्न्यायावलम्बः स्फोर्यते। "पृथिव्यादिसम्बन्धितया दृष्टं स्थूलत्वादिकं निषिध्यमानं पृथिव्यादिसजातीयमुपस्थापयति, उत नेति,' "अद्रेश्यमिति ह्यत्र श्रूयते, अद्रेश्यत्वमदृश्यत्वं, तेन प्रकृतिकार्यपृथिव्यादिषु दृष्टदृश्यत्वनिषेधः सन्निकर्षात्प्रकृतिमेवोपस्थापयति, न पुनरसन्निकृष्टं परमात्मानं, यथाह्यब्राह्मण इति सन्निकृष्टं क्षत्रियमेव कथयपि न पुनरसन्निकृष्टानन्यान्' इति चिन्तामणिरिह भाव्यः। 'अक्षरात्परतः परः' इत्यस्यां श्रुतौ 'अक्षरादित्यत्र अक्षरं मूलप्रकृतिरिति पूर्वपक्ष्युक्तं सिद्धान्तिनस्सम्मतम्। परात् अक्षरात् परः पञ्चविंशको जीवः इति पूर्वपक्ष्याशयो वर्ण्यते द्वितीयपादे। 'अक्षरात्परतः' इत्यत्र सामानाधिकरण्येनान्वयः पूर्वपक्षे। वैयधिकरण्ये

नान्वयः सिद्धान्ते । अक्षरात्-प्रकृतेः (प्रकृतिरूपावधेः) परो जीवः पञ्चविंशकः, तस्मात्परः षड्विंशः परमात्मा इति सिद्धान्तार्थः । 'अक्षरात्परतः' इत्यत्र परादक्षरात्–स्वविकारेभ्यः परात् अक्षरात् इत्यर्थः । तादृशात्पराक्षरात्परः पञ्चविंशकः । पराक्षरावधिकपरो जीवः पञ्चविंशकः । चतुर्विंशतिजडतत्त्वेषु परं प्रधानम् । तस्मात् चतुर्विंशकात् प्रधानात्परः पुरुषः पञ्चविंशकः । इत्थमक्षरं पुरुषश्च एतद्विद्यावेद्यं इति सांख्याभिमानः । 'अतोऽस्मिन्प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते इति" इति श्रीभाष्ये पूर्वपक्षनिगमनम् । 'पञ्चविंशोऽस्तु' इति पूर्वपक्षिणः सांख्यतत्त्वं द्योत्यते । 'अस्तु' इति सांख्येनोक्ते, माभूदयमनर्थः इति सद्यः प्रत्युच्यते । विरुद्धस्वतन्त्रात्मवादो महाननर्थः । 'सर्वज्ञत्वादिदृष्टे- इत्यनेन "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्मनामरूपमन्नं च जायते" इति प्रथममुण्डकप्रथमखण्डान्तिममन्त्रो जिघृक्षितः न द्वितीयखण्डपठितः 'यः सर्वज्ञः सर्ववित् यस्यैष महिमाभुवि' इति मन्त्रो यः पठितः 'यस्मिन् द्यौः पृथिवी चान्तरिक्षं, इति द्युभ्वाद्यायतनसूत्रपरामृष्टमन्त्रादनन्तरं, यश्च गृह्यते 'स्वशब्दा' दिति तत्सूत्रहेतुना । "सर्वत्रासौ वसति' इति वासुदेवशब्दार्थप्रथमभागोऽस्मिन्पादे विव्रियते 'सर्वत्र' इत्यारभ्य "आमनन्ति चैनमस्मिन्" इत्यन्तम । ततःपरं तृतीयपादे 'सर्वं द्युभ्वादि, ब्रह्मरूपे आयतने वसति' इति, वासुदेवशब्दनिर्वचन श्लोकस्य 'समस्तं वसत्यत्रेति वै यतः" इति द्वितीयभागो विचार्यते । एतत्स्वारस्यमप्यभिप्रेत्य एतद्विद्यायामेव 'यस्मिन्द्यौः' इति मन्त्रमारभ्य पादान्तरारंभे विचारो निवेद्यते । 'सर्वज्ञत्वादिदृष्टेः' इत्यत्र दृष्टिशब्दः श्रुतिपरः । 'दर्शनात्', 'दृष्टं' इत्यादिसूत्रप्रयोगानुसारः क्रियते । श्रुतिरस्माकं चक्षु रतीन्द्रियब्रह्मदर्शने । 'चक्षुष्मत्ता हि शास्त्रेण सूक्ष्म कार्यार्थदर्शिना" । 'प्रथमसमुदितं त्वक्षरं ब्रह्मशुद्धं' । 'अथ परा यायातदक्षरमधिगम्यते' इत्युपक्रमोपात्तमक्षरशब्दवाच्यं ब्रह्म । अक्षरविद्येति विद्यानाम अक्षरब्रह्मनाम्ना भवति । "अक्षरात्परतः परः,

इत्यत्र अक्षरपदं मूलप्रकृतिवाचकमेव। "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां" इत्यत्र वेद्यत्वेनोक्तः अक्षरः सत्यः पुरुषो ब्रह्मैव। अक्षरसत्यपुरुषविद्याया एव परविद्येति संज्ञा पठिता। सांख्यानामपि प्रधानस्यैव पुरुषत्वं न संभवति। 'शुद्धं'। शुद्धस्यैव वेद्यत्वरूपोपास्यत्वसंभवः, नाशुद्धस्य जडप्रधानस्य। 'पश्चादुक्तं तु जीवादिकं' 'अक्षरात्परः' इत्यक्षरशब्दघटितपश्चाद्वाक्ये अक्षरशब्दः प्रधानवाचको वा जीववाचको वा भवेत्। अक्षरशब्दस्य जीवपरत्वे, परतः- प्रकृत्यपेक्षया परभूतात्, अक्षरात्-जीवात्, परः" इति योजना। अक्षरशब्दस्य प्रधानपरत्वे, 'अक्षरात्-प्रधानात्, परतः-पर भूतात् जीवात् परः इति योजना इति पद्योजना। इयं परविद्येति श्रुत्यैव शब्दिता। अस्यां परविद्यायां प्रधानात् परो जीवः तस्मात्परः परमात्मा इति परत्वकाष्ठात्वेन निवेश्यते परब्रह्मेति रसो व्यज्यते "तत्परोक्तेः' इति। "अवधितयाभेदतस्तत्परोक्तेः' इति द्वितीयसूत्रहेतुरुच्यते। न परमात्मपरत्वावधिभूतो जीवः पर एव भवेदिति रसो व्यज्यते। 'सर्वज्ञत्वादिदृष्टेः" इति पदेन सर्वज्ञत्वादिगुणविशिष्टपरमात्मध्यातुः "परिपश्यन्ति धीराः' इत्युक्तं विद्याफलभूतं अदृश्यब्रह्मदर्शनमपि व्यज्यते। "रूपोपन्यासाच्चे" ति चरमसूत्रेण प्रथमसूत्रोक्तादृश्यत्वादिगुणकस्य स्वशरीरद्वारा दृश्यत्वं व्यञ्जितम्। "तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रेवाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति। तच्च परमेश्वरस्यैवोचितम्। सर्वविकारकारणत्वात् न शारीरस्य तनुमहिम्नः। नापि प्रधानस्यायं रूपोपन्यासः संभवति, सर्वभूतान्तरात्मत्वासंभवात्" इति पूर्वाधिकरणोक्तसर्वभूतान्तर्यामिसगुणब्रह्मण्येव समन्वयः स्पष्टं भाषितो भगवत्पादैः। "रूपोपन्यासाच्च" इति तृतीयसूत्रस्पष्टपरामृष्टे तन्मन्त्रे एषसर्वभूतान्तरात्मा इत्युक्तं पूर्वाधिकरणोक्तसर्वान्तर्यामिणमेव वक्ति। इत्थं च शारीरकब्राह्मणोक्तं ब्रह्मैवात्रोक्तमिति पूर्वाधिकरणेन स्वरसा

संगतिः । इदमेव त्रैलोक्यशरीरं ब्रह्म अनन्तराधिकरणोक्तवैश्वानर-पुरुषः । एतन्मन्त्रोक्तमेतत्सूत्रोक्तं स्पष्टमेव 'स्मर्यमाणमनुमानं स्यादिति" इति वैश्वानराधिकरणसूत्रेण परामृश्यते । तत्सूत्रेण 'द्यौर्मूर्धानं यस्य विप्रावदन्ति" इत्यादिप्रमाणोक्तद्युमूर्धत्वादिविशिष्टविश्वशरीरं परामृश्यत इति शांकरं भाष्यम् । "यदुक्तं सार्वात्म्यरूपोपन्यासात् ब्रह्माभ्युपगन्तव्य-मिति, तन्न-वैश्वानरवाक्ये तस्यैवोक्तत्वात्" इति पूर्वाधिकरणेन वार्तिकोक्ता संगतिः "रूपोपन्यासाच्च" इति सूत्रस्य प्रथमस्थापिनार्थेनैव संगच्छेत । "द्यौर्मूर्धाचक्षुषी चन्द्रसूर्यौ" इति मन्त्रेणैवोत्तराधिकरण-संगतिर्वर्णिता सर्वग्रन्थेषु । तत्र प्रसंगादापतितं त्रैलोक्यशरीरत्वयुक्त-वैश्वानरचिन्तनमिति सर्वसंमता संगतिः । प्रसंगात् बुद्ध्यावायातं वैश्वा-नरवाक्यं विचार्यानन्तरं मध्येविच्छिन्नं मुण्डकवाक्यविचारं प्रवर्तयति द्युभ्वा-द्यधिकरणे इति ब्रह्मविद्याभरणादिसर्वग्रन्थसंमतम् । 'अन्ये पुनर्मन्यन्ते' इत्यारभ्य भाष्ये संप्रदायविरुद्धं नूतनतया कल्पितस्तृतीयसूत्रार्थो न केनापि कथमपि संगच्छेत । प्राचीनसंप्रदायत्यागाच्च किमप्यन्यत् ततो लभ्येत ॥

## ॥ वैश्वानराधिकरणम् ॥

अत्र वक्तव्यं सर्वं विस्तरेणोक्तमस्माभिरसूत्रानुगुण्यसिद्धि-विमर्शे । अत्र वैश्वानरविद्यायां मुमुक्षुभिर्मीमांसा क्रियते 'को नः (जीवात्मनां) आत्मा, किं ब्रह्म' इति । 'अत्रात्मशब्दः किं जीवात्म-वचनः किं वा परमात्मवचनः' इति विशयः प्रदर्शितो वार्तिके । 'अथवा शारीरः आहोस्वित् परमेश्वरः' इति शांकरभाष्यम् । अत्र जीवव्यति-रिक्तः परमात्मा ब्रह्मेति स्पष्टं निर्णीय तं बहुमुमुक्षुमुखेन मीमांसमानया श्रुत्यैव । तैत्तिरियानन्दमीमांसायां ब्रह्मणः आनन्दधर्मस्य निरतिशयत्वं निर्णीतम् । अत्र 'वैश्वानरः परमात्मा, न अनात्मा न वा जीवः इति' इति निर्णयो वक्ष्यते वार्तिके । 'को न आत्मा किं ब्रह्म' इत्यत्र आत्म-पदसमभिव्याहृतं ब्रह्मपदं जीवात्मनो व्यावर्तते घटपदमिव शुक्लपदसमभि-

व्याहतं नीलघटादित्युक्तं" इति वार्तिकम । जीवब्रह्मभेद एव श्रुतिकृतया मीमांसया निर्णीयते । बादरायणीयब्रह्ममीमांसया तदनुसारेण तयोर्भेद एव सर्वत्र निर्णीयते । सगुणवैश्वानरब्रह्मणः परमात्मत्वं निर्णीयते ।

(५५९) "अग्निर्मूर्धेत्यादिकमपि सर्वभूतान्तरात्मत्वोपपादकं शरीरशरीरिभावविधया निर्विशेषब्रह्मपरमेव" इति साहस्री अस्मदुक्तं सामानाधिकरण्यहेतुं स्वाभिमतत्वेन, श्रीशङ्करभगवत्पादसंमतत्वेन च वदतीति भृशं सन्तुष्यामः । निर्विशेषब्रह्मपरमित्युक्तिर्मिथ्या, केवलाभिनिवेशमूला । इदं वैश्वानरवाक्यं सगुणब्रह्मपरमिति सर्वसंमतमिति विस्मृतं साहस्र्या । यथैतस्य वाक्यस्य विश्वशरीरसगुणब्रह्मपरत्वं, तथैव द्युमूर्धत्वाद्येतत्सदृशरूपेण व्यासघटितपूर्वाधिकरणमुण्डकवाक्यस्य ।

(५६४) -- 'अत्र नोपासनाप्रकरणम्, किन्तु ज्ञेयप्रकरणमेवे" ति वदन्ती साहस्री स्वमतसर्वग्रन्थोक्तं व्याहन्ति । हन्यतेऽत्र साहस्री " तथा दृष्ट्युपदेशात्" इति सूत्रखण्डेन तस्य स्वभाष्येण च । "वैश्वानरः परमात्मा द्युमूर्धत्वादिविशेषधर्मवत्त्वात् इति सूत्रार्थः इति प्रदीपोक्तः प्रतिज्ञासूत्रार्थः । यह्वीभिः स्वनिर्णयोक्तिभिरपि व्याहन्येते प्रदीपसाहस्र्यौ । आत्मघाते भूयो मज्जति तत्कर्ता ।

स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या
ध्येयो वैश्वानरात्माऽस्थिरबहुविषयः (स्थिरबहुविशयः) शब्दलिंगादिसाम्यात् ।
मैवं ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दः
वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुषि परधीर्गार्हपत्यादिधीश्च ॥

"पूर्वं रूपोपन्यासाच्चेत्यत्र भगवतो विश्वरूपोपन्यासेन द्युमूर्धत्वादिना भगवतः परमपुरुषत्वं प्रसाधितम् । इदानीं तत्प्रसंगात् वैश्वानरविद्या चिन्त्यते । अत्रापि द्युमूर्धत्वादिपरिक्लृप्त्या वैश्वानरः परमपुरुषश्चिन्त्यते इति" इति चिन्तामणिप्रदर्शितसंगतिः बहुपरग्रन्थसम्मता ।

प्रथमपादे रूपपदेन 'रूपोपन्यासाच्च' इति पूर्वाधिकरणचरमसूत्रज्ञापनेनेयं संगतिर्व्यज्यते। 'मूर्धादि' इत्यादिपदेन चक्षुःप्राणमध्यकायमूत्रस्थानपादानां ग्रहणम्। यथासंख्यमत्र कल्पना। "ध्येयो वैश्वानरात्मा" 'आत्मानमेवेमं वैश्वानरं', 'एतमभिविमानमात्मानं वैश्वानरमुपास्ते" इत्युपास्यत्वेनोक्तो वैश्वानरः आत्मा इत्यर्थः। 'अस्थिरबहुविषयः' शब्दस्यास्थिरत्वं एकस्मिन्नर्थे एव निष्ठाराहित्यम्। बह्वर्थसाधारण्यमिति यावत्। प्रतिज्ञासूत्रोक्तसाधारणशब्दार्थं उच्यते अनेन। अस्थिरत्वमनैकान्त्यम्। "स्थिरबहुविशयः" इत्यपि पाठः। तेन अयमेवार्थ इत्यशक्यनिर्णयत्वमुच्येत। तत्तत्परत्वकोटेः स्थिरत्वमेव। समानबलत्वं सर्वकोटीनाम्। "शब्दलिंगादिसाम्यात्" इति पूर्वपक्ष्युक्तसूत्रोपात्तसाधारणत्वहेतुविवरणम्। "मैवं ब्रह्मेत्यधोतेः'। "को न आत्मा किं ब्रह्म' इति विचार्य, "अयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्या तमभ्याजग्मुः। स च "केकयः संप्रतीममात्मानं वैश्वानरमध्येति, तमभ्यागच्छाम" इत्यवोचत्। सर्वेपि तं गत्वा "को न आत्मा किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानाः अवोचन्। "आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते" इति श्रीभाष्यम्। 'उपक्रमे' को न आत्मा किं ब्रह्म' इति ब्रह्मशब्दप्रयोगात्, ब्रह्मशब्देनात्मशब्दस्य विशेषणात्, तत्स्थाने वैश्वानरशब्दस्य पठनेन स्थानप्रमाणबलात् ब्रह्मशब्दैकार्थ्येन विशेषणात्, मीमांस्यवस्तुनि ब्रह्मशब्दपठनात्" इति पदयोजना। 'भुवनतनुतया' अन्यत्र ब्रह्मसंबन्धित्वेन प्रसिद्धस्य विश्वशरीरकत्वस्यात्रापि वर्णनात्। अनेन द्वितीयसूत्रहेतुस्संगृह्यते। "योगतस्त्वग्निशब्दः" "स एषोग्निर्वैश्वानरः" इति वाजसनेयकवैश्वानरविद्यापठिताग्निशब्दस्य ब्रह्मपरतया साक्षाद्योजना। "वैशिष्ट्याद्वा' इति "तथा दृष्ट्युपदेशात्" इति सूत्रप्रदर्शिता, अग्नि-

शरीरकपरमात्मोपासनरूपा गतिः । इयमेव गतिराश्रिता प्रातर्दनाधिकरणे । 'तथा' इति सूत्रपदस्य "जाठरापरित्यागेन' इति शांकरभाषितभाष्यार्थौ, अङ्गीक्रियतेऽस्माभिः । 'क्रियाङ्गं स्ववपुषि परश्रीगार्हपत्यादिधीश्च', उपासकेन स्वशिरश्चक्षुःप्राणमध्यकायमूत्रस्थानपादरूपे स्वशरीरे "तस्यह्वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुः" इत्यादिश्रुत्या विहिता चक्षुरादित्वेन कल्पनात्मिकाबुद्धिः, उरोलोमहृदयमनआस्यरूपे स्वावयवे 'उर एव वेदिः इत्यादिश्रुत्या विधीयमाना वेदिबर्हिरादिरूपेण कल्पनारूपाबुद्धिश्च वैश्वानरविद्यांगभूतप्राणाहुतिक्रियांगभूता वेदितव्या' इति पदयोजना । संपत्तिसूत्रार्थश्चरमसूत्रार्थश्च संगृहीतौ । "एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयान्युरोलोमादीनि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिराद्यग्निहोत्रोपकरणभूतान् परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरं आराधयेदित्युपदिश्यते" इति श्रीभाष्यम् ।

अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां क्वापि निःश्रेयसाप्तिः
तस्माद्वैश्वानरोऽसौ न पर इति फलं स्वन्नसिद्ध्यादि मैवम् ।
ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यबाधात्
सर्वाघध्वंस उक्तः फलमपि परमं ब्रह्मचैवात्ममन्नम् ॥

'प्रतीकोपासनान्नमुक्तिः, यथा मनो ब्रह्मेत्युपासीत' इत्यादिषुः फलं च सर्वत्रावस्थितान्नप्राप्तिरित्युच्यते । अतो नेयं ब्रह्मविद्या' इत्याक्षिप्य परिह्रियते । 'ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह' । ब्रह्मैव द्युमूर्धादि दृष्ट्यन्वितस्वरूपघटितं ध्येयत्वेनोच्यते । अतो ब्रह्मण एव प्राधान्यात् न नामादिप्रतीकोपासनतुल्यत्वम् ।" इति पदयोजना । ब्रह्मशब्दात्मशब्दौ उपक्रमपठितौ । ब्रह्माख्यपरमात्मन एवात्र प्राधान्येनोपासनम् । नात्र ब्रह्मदृष्टिघटितमन्यत्प्राधान्येन ध्येयतयोच्यते । 'सर्वाघध्वं स उक्तः' फलत्वेन,' तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते " इति । सर्वपाप्मनाशे सद्य एव मोक्षो भवेद्

अर्चिरादिगणातिवहनेन । 'अप्रतीकालम्बनान्नयतीति बादरायणः" । 'श्रुतो र्पनिपत्कगत्यभिधानाच्च' इति सूत्रद्वयमिह भाव्यम् । तत्रोत्तराधाना- मश्लेष उक्तः । अत्र पूर्वाघानां दाह उच्यते । फलद्वयसमुच्चयः सर्वविद्यासु सर्वविद्याफलस्याविशिष्टत्वात् ।' 'व्याप्तमन्नं परमं ब्रह्म' । सर्वाघध्वंस' इत्यविद्यानिवृत्तिरुक्ता । अत्र सर्वव्याप्तब्रह्मरूपपरम- भोग्यान्नादत्वमुच्यते । " सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्व- न्नमत्ति" इत्येतद्विद्याफलतया निर्दिष्टं सर्वलोकसर्वभूतसर्वात्मस्व्याप्तमन्नं च सर्वव्यापकं निरतिशयभोग्यरूपं ब्रह्मैव " इति पदयोजना तैत्तिरीयोक्तफलमेवेदम् । " अद्यते इत्यन्नमिति व्युत्पत्त्या, ' अहमन्नमह मन्नादः इति श्रुत्या च परमेव ब्रह्म अन्नशब्देनाभिधीयते " इति चिन्तामणिरिदमेवाह ॥

त्रिष्वत्रोपासितॄणां मितहृदयगुहाक्ष्यन्तरश्चिन्त्य उक्तो
विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ ।
षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्रतज्ज्ञप्रपञ्च-
व्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या नमन्ति ॥

प्रथमाधिकरणत्रिकमेका पेटिका । उत्तराधिकरणत्रिकमपरा- पेटिका । " उपासितॄणां" इति पदं पूर्वार्द्धगादद्वयेऽप्यन्वेति । षट्स्वप्यधिकरणेषु उपासनविद्या एव, न पराभिमतनिर्गुणगन्धोऽपि । अर्भकौकस्त्वसूत्रं गुहासूत्रं स्थानादिसूत्रं च भाव्यानि प्रथमत्रिके । 'अधि- दैवाधिलोकादिषु, रूपोपन्यासाच्च, स्मर्यमाणमनुमानं स्यादिति " इति सूत्राणि भाव्यान्युत्तरत्रिके । "विश्वश्चायं नरश्चेति, विश्वेषां वाऽयं नरः विश्वे वा नरा अस्येति विश्वानरः परमात्मा सर्वात्मत्वात् । विश्वानर एव वैश्वानरः । 'अभिविमिमीते वा सर्वं जगत्कारणत्वादित्यभिविमानः' इति श्रीशांकरभाष्यमिह रस्यम् । वैश्वानरशब्दः प्रयुक्तो ब्रह्मणि अन्तर्यामिणि । "य इमं च लोकं च परं च लोकं सर्वाणि भूतानि योऽन्तरो यमयति इति" इत्यन्तर्यामिश्रुतिः । " सर्वभूतान्तरात्मा '

इति मुण्डकश्रुतिः । सर्वत्र सगुणब्रह्मैव निगद्यते । सर्वेष्वधिकरणेषु प्रकृतिजीवभिन्नत्वमेव स्पष्टमुपपाद्यते सूत्रकारेण ब्रह्मणः । जीव-ब्रह्मभेदो निष्करुणं निरस्यते सर्वत्रैकरूप्येण, यथा जडब्रह्माभेदो निर-स्यते । ब्रह्मात्मपुरुषशब्दाः प्रकरणप्रमाणानुसाराच्च ब्रह्मणि वर्तन्ते ॥

स्वाधीनाशेषसत्तास्थितियतनतया सर्वभावेन तिष्ठन्
ग्रस्ताशेषोऽक्षिनित्यस्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः ।
स्वर्लोकाद्यंगवैश्वानरपदविषयो लक्षणस्यादिमस्य
प्रोक्तः पादे द्वितीये श्रुतिनिकरशिरःशेखरः श्रीनिवासः ॥

षण्णामधिकरणानां विशेषतो भगवद्गुणविशेषप्रख्यापकत्वमाह ", इति चिन्तामणिः । " बृहन्तो ह्यस्मिन् गुणाः " इति ब्रह्मशब्दो निरुच्यते । ' आदिमस्य लक्षणस्य । लक्षणं-अध्यायः । ब्रह्मलक्षणसमन्वय-परस्याध्यायस्य लक्षणसंज्ञाऽन्वर्थेति व्यज्यते । श्लोकप्रथमपादः प्रथमा-धिकरणसंग्राहकः । ' ब्रह्म सर्वं स्वाधीनसर्वसत्तास्थितियतनत्वात् । तज्जलान् इति हेतौ चरमोक्तप्रलयकर्तृत्वस्य द्वितीयाधिकरणे प्रतिपाद्यत्वात्सूच्यते श्लोकद्वितीयपादारंभे । ' ग्रस्ताशेषः अशेषचरा-चरात्ता । 'मृत्युर्यस्योपसेचनं" इत्युक्तरीत्या सर्वोपसंहारसाधन-भूतमृत्युरपि न शिष्यते । पक्वग्रासवत् अस्य महाभूतस्याशेषचराचरमिति व्यज्यते ग्रस्तशब्देन । ओदनप्रकरणे ग्रासशब्दस्यौचित्यं रसिककलोक-रस्यम् ।

' अक्षिनित्यस्थितिः ' अनेन प्रतिबिंबाक्षिपुरुषव्यावृत्तिः । ' अनवस्थितेरसंभवाच्च नेतरः ' इति सूत्रं स्मार्यते । ' अखिलतनुः ' अन्तर्याम्यधिकरणप्रतिपादितसर्वशरीरत्वमुच्यते । ' कल्पिताग्न्यादि-गात्रः' । ' रूपोपन्यासाच्चे' ति सूत्रं स्मार्यते । यद्यपि स्वरूपमदृश्यं स्वरूपस्यापि आपरोक्ष्यं लभ्यते कल्पिताग्न्यादिगात्रविशिष्टभावनेन । अत्र सर्वत्र भगवतः करुणा प्रस्तूयते । करुणैव रूपिणी श्रीः ॥ इदं व्यज्यते श्रीनिवासः इति ।

,, जीवादौ प्रथमपादेऽति व्याप्तिनिरास एव स्यात् न त्वसंभव इति सर्वब्रह्मपरत्वमेवेति भगवत्पादा मन्यन्ते " इति वदन्प्रदीपः चतुर्थ-पादारंभे कल्पतरूक्तनिष्कर्षेण विरस्तः । प्रथमपादस्याऽसंभवव्यवच्छेदपरत्वं मतद्वयेऽपि समानम् । "ईक्षत्यधिकरणे सद्विद्यायाः ब्रह्मपरत्वव्यवस्थापनात्" इति प्रदीपोक्तो हेतुरसिद्धः, स्वमतग्रन्थबाधितश्च । 'नाशब्दं न प्रधानं' इति तदधिकरणसाध्यम् । ईक्षणहेतुश्चाचेतनप्रधानव्यावर्तकः । न चेतनजीवव्यावर्तकः। आत्मशब्दश्च जीवेऽपि संभावितः। 'ईक्षितृत्वश्रवणात्कारणस्य', 'न प्रधानमचेतनमात्मशब्दावलम्बनं भवितुमर्हति: "यदि ह्यचेतनं प्रधानं तच्छब्दवाच्यं तदसीति ग्राहयेत् मुमुक्षुं चेतनं सन्तमचेतनोऽसीति, तदा विपरीतवादिशास्त्रं पुरुषस्यानर्थायेत्यप्रमाणं स्यात्', 'चेतनविषय एव मुख्य आत्मशब्दः', 'न चात्राचेतनस्य निश्चायकं किञ्चित्कारणमस्ति', 'समानैव सर्वेषु वेदान्तेषु चेतनकारणावगतिः' इत्यादीनि स्वभाष्यवाक्यानि पठित्वा स्वमतं बुद्ध्यतां प्रदीपकृत् । अत्र सूत्राणां कारणस्याचेतनप्रधानव्यावर्तकत्वे पैदम्पर्यं 'अनन्तराधिकरणे' तस्यानन्दमयत्वोपपादनेन जीवव्यावर्तकत्वे । तदनन्तराधिकरणे आदित्यादिदेवजीवव्यावर्तकत्वे ॥

"श्रीभाष्यमते सर्वत्र यह्येति वाक्ये ब्रह्मपक्षकपरमात्मतासाधनस्यैव विवक्षणात् ब्रह्मपदेन परमात्मतया एकसाधनस्यानपेक्षितत्वात् अधिकरणवैयर्थ्योपत्तिः" इति प्रदीपोक्तमसंगतं, पूर्वपक्षे ब्रह्मशब्दस्य जीवे योजनं भाष्यद्वयेऽपि समानम् । "निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्तनं एतद्ब्रह्म इति, तदपि प्रकृतपरामर्शित्वात् जीवविषयमेव' 'यत्सर्वेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणं, इदं च सर्वं खल्विदं ब्रह्मे' ति वाक्योपक्रमे श्रुतं, तदेवेहोपदिश्यत इति युक्तं इत्यादिकं स्वभाष्य "यदपि वाक्यशेषे स्वशब्देन ब्रह्मसंकीर्तनं तदपि प्रकृतपरामर्शिनैतद्वा सामानाधिकरण्यात् देहादिबृंहणकर्तृत्वयोगेन जीवविषयमेव व्याख्येयम्" इति वार्तिकव्याख्यां भामत्यादिग्रन्थांश्च पठत्वस्मत्सुहृत् । यद्यपि

ब्रह्मशब्दः पठितोऽत्र, एतत्प्रकरणप्रतिपाद्यं ब्रह्मशब्दवाच्यं वस्तु जीवो वा ब्रह्म वेत्यत्र मतद्वयसंप्रतिपन्नः विशयो विचारश्च।

## ॥ प्रथमतृतीयपादः ॥

अस्मिन्पादेऽनन्तरपादे च सूत्रस्वारस्यानि श्रुतिस्वारस्यानि सारावलीश्लोकस्वारस्यानि च विस्तरशो निरूपितानि सूत्रानुगुण्यसिद्धिविमर्शे। अस्मन्मतोपरि साहस्रीप्रदीपोक्तान्येव विमृशामः॥

(५७५)—'इदं रजतमित्यादिसामानाधिकरण्यमेव बाधायां सामानाधिकरण्यस्य निदर्शनम्। सर्वमिदं ब्रह्मेति सामानाधिकरण्यं प्रपञ्चप्रविलापनार्थं बाधायां सामानाधिकरण्यमिति चानर्थान्तरम्' इति साहस्री। 'सर्वमिदं ब्रह्म' इति न लौकिकी प्रतीतिः। श्रुतिवाक्यम् तत्। तस्य श्रुत्युक्तप्रकारेणैव सामानाधिकरण्यनिर्वाहः कर्तव्यः। श्रौतहेत्वनुरोधो न्याय्यः। 'तज्जलान्' इति तत्र सामानाधिकरण्ये हेतुः प्रदर्शितः अनुपदमेव तत्छ्रुत्या। 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत्' इति सर्वभवनहेतुः प्रदर्शितः अनुप्रविश्यान्तर्यामितयाऽवस्थानमिति। भेदाभेदश्रुत्योरापातविरोधघटकान्तर्यामिब्राह्मणेन चेतनाचेतनप्रपञ्चं प्रति ब्रह्मणः शरीरिभावो निरूपितः येन सामानाधिकरण्यस्य श्रुतिसंमतघटना लभ्यते। "इदं रजतं" इति भ्रान्तपौरुषेयवाक्यस्योदाहरणमत्यन्तविषमम्। इदं रजतमिति भ्रान्तस्य भ्रान्तिवचनम्। यदा तस्य नेदं रजतमिति बाधकज्ञानं जायते, तदा किं सः रजतमात्रं मिथ्येति गृह्णाति। इदं न रजतमिति बुध्यमानोऽन्यत्र रजतलाभार्थमेव भृशं प्रवर्तते रजतमेव सत्यत्वबुद्ध्याऽर्थयमानः। 'सर्वं खल्विदं ब्रह्मेति' वदन्ती श्रुतिः किं भ्रान्ता रजतभ्रमवान्पुरुष इव। सर्वस्य ब्रह्मत्वेनाऽनुसन्धानानुभवादिकं विधत्ते श्रुतिः। सर्वस्य ब्रह्मात्मकत्वज्ञानानुभवाभ्यां रागद्वेषनिवृत्तिः सर्वभूतसुहृत्त्वं च

भवेत् । एतदनुभवप्रयुक्ता "मित्रामित्रकथाकुतः" इति प्रह्लादोक्तिः । "ब्रह्मस्वभावो हि प्रपञ्चः न प्रपञ्चस्वभावं ब्रह्म" इति भगवत्पादभाष्योक्तं स्मरणीयम् । ब्रह्मात्मकस्य प्रपञ्चस्य ब्रह्मस्वभावभूतानन्दत्वानुकूलत्वे स्वाभाविके । अस्मत्कर्मरूपोपाधिकृतं तस्यास्मान्प्रति प्रातिकूल्यम् । सर्वोऽपि प्रपञ्चः स्वतो ब्रह्मस्वभावभूतानन्दत्वाऽऽनुकूल्यव्याप्तः इत्यनुभवस्सततमभ्यसनीय इति श्रुत्याशयः । स एव वस्तुस्वभावस्य यथार्थानुभवो भवेत् । कर्मोपाधिकप्रातिकूल्यमपबाध्य वस्तुसत् ब्रह्मस्वभाव भूतानुकूल्यं काममाविर्भवतु । स एवानुभवो मुक्तिदशायाम् । "सर्वेष्वाप्यानुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य व्यक्तिं तन्मुक्तिकाले भजति भवकृतज्ञानसंकोचहानेः" इति तत्त्वमुक्ताकलापश्लोकः पूर्वमेवोदाहृतः ॥

(५७६) 'मुक्तोपसृप्यव्यपदेशाच्च' इत्यनेन मुक्तात्मब्रह्मणोर्भेदापलमः कथं न इति साहस्रयुङ्क्षापितं चोद्यं दुष्परिहरमेव । 'कर्मकर्तृव्यपदेशाच्च" इति सूत्रेण यथा जीवब्रह्मभेदः सुदृढं साधितः, तथात्रापि । उभयत्र हेतुसामान्यात् । 'मुक्तैरुपसृप्यं-समीप एव प्राप्यं, न तु प्राप्त्यर्थं लोकान्तरगमनमपेक्ष्यते इति सूच्यते उपपदप्रयोगसामर्थ्यात् । तथेदं मुक्तत्वमेवोपसृप्यत्वमित्येव पर्यवस्यति इति न मुक्तात्मब्रह्मणोर्भेदकथाप्यत्र इति साहस्रयुक्तमुच्चरितं पूर्वमेव । "मुक्तैरुपसृप्यं मुक्तोपसृप्यं" इति शांकरभाष्यम् । "गान्धारानेवोपसंपद्यते" इति सद्विद्यावाक्ये उपोपसर्गस्य संपत्तिशब्दस्य, उपसर्गविशिष्टक्रियापदस्य च कोऽर्थ इत्यात्मानमेव पृच्छतुसाहस्रीकृत्, विरमतु चेद्दशापार्थलेखनात् । अत्र मुक्तस्यापि प्राप्यं परं ब्रह्मेति वर्णनात् गौणमुक्तिर्जीवन्मुक्तानामाधिकारिकाणां हिरण्यगर्भादीनामिति सूच्यते, यानधिकृत्य 'जगद्व्यापारवर्जे' मित्यादिसूत्राणि इति प्रदीपः । केयं व्याघातरसिकता । मुक्तोपसृप्यत्वात् द्युभ्वाद्यायतनभूतः आत्मा न जीवः इति जीवब्रह्मभेदः खल्वत्र प्रतिसूत्रं साध्यते । किमिदं वैपरीत्यम् । साहस्रयभिमताभेदश्चेत्साध्यः हेतोर्विरुद्धत्वं स्पष्टम् । 'सूर्यद्वारेण विरजाः प्रयान्ति' इत्येतत्प्रकरणवाक्यं स्मरणीयम् । "भेदव्यपदेशात्' इति सूत्रेण तु सूत्रस्य 'भेदव्यपदेशाच्चेह भवति 'तमेवैकं जानत

आत्मानं, इति ज्ञेयज्ञातृभावेन । तत्र प्राणभृत्तावन्मुमुक्षुत्वात् ज्ञातः । ब्रह्म-ज्ञेयं द्युभ्वाद्यायतनं न प्राणभृत्' इति शांकरभाष्येण च साहस्र्यभिमानो-निरस्यते । 'तस्मात् द्युभ्वाद्यायतनप्रकरणे 'द्वासुपर्णा' इत्यस्यामृचि "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति पर-स्परविरोधिभ्यां जीवपरमात्मानावुपलक्ष्य, जीवात्मनो भेदेन परमात्म-प्रतिपादनात् स एव प्रकरणीह द्युभ्वाद्यायतनमिति सिद्धम्" इति वार्तिकम् ॥

## ॥ अथ भूमाधिकरणम् ॥

(५८५) 'भूमपदार्थश्च यदि निर्विशेषं ब्रह्म, तर्हि कथं 'धर्मोप-पत्तेश्च' इति सधर्मत्वोपपादनं इति साहस्रयुद्भावितं चोद्यं दुष्परिहर-मेव । 'धर्मोपपत्ते' रिति तु सत्यत्वामृतत्वादिब्रह्मस्वरूपधर्माभि-प्रायमेव । "अद्वैतिमते धर्मशब्दोऽपि स्वरूपे भाक्तो वर्तते इति स्वरूपात्मकधर्मवत्त्वमत्र बोध्यमानं न निर्विशेषवादविरोधि, व्यावर्तकमात्र-परत्वाद्धर्मशब्दस्य" इति. साहस्रीदत्तस्य उत्तरस्योपहास्यतास्फुटा । निर्विशेषवादो धर्मशून्यब्रह्मवादः । अत्र निर्विशेषप्रकरणमित्यद्वैति-नामभिमानः । निर्विशेषं भूमविद्या प्रतिपाद्यब्रह्म इति समर्थनाय तस्य सधर्मकत्वे साधके 'धर्मोपपत्तेश्च' इति को वा हेतुं निबध्नीयात् । 'धर्मोपमत्तेश्च' इति सूत्रस्य "धर्मशून्यत्वोपपत्तेश्च" इत्यर्थवर्णनं आपद्येत । स्पष्टत्वनियमबद्धः सूत्रकारः . धर्मशब्दं स्वरूपपरत्वे प्रयुंक्ते इति कथनं ध्रुवं तं हासपदं गमयेत् । "सत्यत्वं स्वमहिमप्रतिष्ठि-तत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोप-पद्यन्ते, नान्यत्र" इति शांकरभाष्यं साहस्र्युक्तलक्षणाव्याहन्तृ ॥

## ॥ अथाक्षाधिकरणम् ॥

(५९५) 'अनेन जीवब्रह्मभावव्यावृत्तिपरेण 'अन्यभावव्या-वृत्तेश्च' इति सूत्रेण कथमद्वैतविरोधो न भवति' इति साहस्री प्रश्नः असमाधेय एव ।

(५९८) — व्यावहारिकजीवब्रह्मभेदस्य बहुशः पूर्वं साधनात् किमर्थमुक्तं सूत्रमिति पृच्छति साहसी । एतेन जीवब्रह्मभेदः बहुशः साधितः सूत्रकारेणेति स्पष्टमभ्युपगम्यते । तद्भेदस्य व्यावहारिकत्व-मात्ररूपमिथ्यात्वं नैवोक्तं सूत्रेण । मिथ्याभेदस्य बहुभिरधिकरणैः साधनकथमेवोपहास्यं मिथ्यैकान्तं च । साधनमेव निषेधनं विपरीत-चक्षुषाम् ॥

अस्याधिकरणस्य निर्गुणब्रह्मसाधनपरत्वं परिगण्यते प्रदीपेन (२०६) पृष्ठे । 'अक्षरं ब्रह्म आकाशान्तविधारकत्वादिति सूत्रार्थः' इति प्रदीपः प्रथमसूत्रे । "सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म-कुतः, प्रशासनात् । प्रशासनं हीह श्रूयते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि । प्रशासनं च पारमेश्वरं कर्म इति द्वितीयसूत्रभाष्यम् । इदं सर्वं सगुण-परमेश्वरस्यैव साधकं, न निर्विशेषस्य । अक्षरधियः-आनन्दादिधर्म-धियः, प्रशासनादिधियः सर्वा अपि एकस्मिन्नेव सगुणपरब्रह्मणि भवन्ति इति सूत्रकारदर्शनम् ॥

(५९९) — सगुणब्रह्मध्यानेन कार्यब्रह्मलोकप्राप्तौ तत्साक्षा-त्कारस्यापि संभवात् कथं ध्यायति कर्मण इव साक्षात्कारकर्मणोऽपि नास्तत्वं इति पृच्छयते । 'कार्यं बादरिः' इत्यत्र, "कार्यं अपरं ब्रह्म उपासीनानामर्चिरादिगत्याकार्यब्रह्मलोकप्राप्तिरिति बादरिमतमद्वैतमतं च । अपरं ब्रह्मेति सगुणः ईश्वरः अभिप्रेयते वा हिरण्यगर्भरूपजीवोऽभिप्रेयते वा । उभयथाप्युच्यते । 'अपरं ब्रह्म वा, आहोस्वित् परं ब्रह्म वेति भाष्यप्रदर्शितो विशयः । अपरमिति पूर्वपक्षः । तत्किं सगुणं ब्रह्मेति पृच्छामः । अपरं ब्रह्मैव सगुणब्रह्मेति चेत्, यथा सगुणनिर्गुणयोरैक्यं मुहुर्मुहुरुच्यते प्रदीपेन, तथा परापरब्रह्मणोरप्यैक्यं वक्तव्यम् । तथा च परापरविभागाभावः । अपरनिषेधनं परसाधनं च न संगच्छेत । अत्र परब्रह्मशब्दवाच्यसगुणेश्वरस्य निषेधः 'स सामभिरुन्नीयते ब्रह्म-

लोकं' इति गतिश्रुत्या बाध्यते। "अत्र त्रिमात्रोंकाराभिध्यानात् क्रममुक्तिरिति भवति" इति प्रदीपनिष्कर्षेणास्य निर्विशेषपरत्वं बाध्यते। प्रदीपस्य ३१७ पृष्ठेऽस्याधिकरणस्य निर्विशेषपरत्वं निकृष्टम्। 'अत्र ध्यायति कर्म परमात्मेति निर्णीतम्। अपरब्रह्म तु ज्ञेयतया उपन्यस्तं' इति शारीरकन्यायसंग्रहस्तस्य प्रदीपकृत्त्वाख्याच। गतिश्रुतिश्च बाध्यते ताभ्याम्। अपवादैकव्यसनिनां किं वा न बाध्येत। निर्विशेषस्योपास्यत्वकथनमेव प्रदीपनिष्कर्षविरुद्धम्। समष्टिपुरुषं चतुर्मुखमाक्षिप्य तन्निषेधेन परमात्मानं ज्ञापयति सूत्रकारः इत्यभिध्यायतीक्षतिशब्दावेक विषयौ, तत्क्रतुन्यायात्। यः परः पुरुषः अभिध्यायते स एव ईक्षणीयः प्राप्यश्च। निर्विशेषस्य ओंकारालम्बनद्वाराऽभिध्यानकथनमुक्तिमात्र व्याहतम्। "त्रिमात्रेणोंकारेणालंबनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः। क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायं भविष्यतीत्यदोषः" इति भाष्यनिगमनवाक्यमपि व्याघातप्रचुरम्। "ब्रह्मलोकप्राप्तिलिंगं परपुरुषश्रुतिभ्यां बाधित्वा वाक्यं प्रणवध्येयब्रह्मणि समन्वितं" इति रत्नप्रभानिगमनमपि तथैव। "कर्मकर्तृव्यपदेशात्" इति सूत्रेण यथा जीवब्रह्मभेदः साध्यते, तथैव "ईक्षति कर्मव्यपदेशात् स एव परः पुरुषः न चतुर्मुखजीवः" इत्यनेन सूत्रेण साध्यते इति स्पष्टम्।

(६००) 'सति चैवमीक्षतिकर्मव्यपदेशः कथं निर्विशेषब्रह्मविवक्षाकारणं' इति पृष्ट्वा, 'तथा चेक्षतिकर्मव्यपदेशो निर्विशेष ब्रह्मविवक्षायां हेतुरेव' इत्युत्तरं दीयते। प्रश्नोत्तरयोरविशेषः स्फुटः। न कापि युक्तिरुक्ता उत्तरवाक्ये। प्रश्नवाक्यमेवोत्तरवाक्यमपि भवति। एतेन प्रश्नस्यासमाधेयत्वमेव फलति॥

(६०७)—"विषयवाक्ये" एतं त्रिमात्रेण इत्येतच्छब्दे विद्यमाने सूत्रे 'स' इति तच्छब्दः कुतः इति पृष्ट्वा 'स इति तच्छब्दोपादानं तु जीवब्रह्मणोरभेदाभिप्रायेण। तथा च प्रत्यगभिन्नं ब्रह्मच 'अथातो ब्रह्मजिज्ञासा इति सूत्रे ब्रह्मपदार्थ इति फलति। एतदर्थमपि स इति सूत्रे सशब्दो

ह्लवः साध्यसमर्पणार्थं" इत्युत्तरं दीयते। साध्यसमर्पणार्थमित्युक्तमत्र समन्वयोपपादकाधिकरणसप्तकेऽपि समानम्। 'द्युभ्वाद्यायतनं आत्मा सः नैव प्राणभृत्', 'भूमा सः न प्राणशब्दाभिलप्यो जीवः यस्मादधिकतया भूमोपदिष्टः', 'अक्षरं सः परमेश्वरः नैव जीवः' ईक्षति कर्मव्यपदेशात् सः परमपुरुषः पुरुषोत्तमः न समष्टिपुरुषश्चतुर्मुखः', 'दहराकाशः सः परमात्मा नैव जीवः, प्रमितः सः नैवः आकाशः सः' इति सर्वत्र स इत्यनुपपद्यते। अक्षराधिकरणमेकं विहाय पक्षसमर्पकः पुंलिंगशब्दः। द्युभ्वाद्यायतनमित्यत्र 'यस्मिन्द्यौः' इति मन्त्रपठितः आत्मा पक्षः। इत्थमेव 'आनन्दमयः अन्तरादित्यपुरुषः आकाशः प्राणः इन्द्रः इति पक्षसमर्पकपुंलिंगपदभूयस्त्वानुरोधेन' "भेदव्यपदेशाच्चान्यः" इत्यन्यशब्दः पठितः प्रथमपादेऽनुपञ्जनीयत्वेन' तथैव 'अत्ता' अनन्तरं अन्तर्यामी 'अदृश्यत्वादिगुणकं' वैश्वानरः इत्याद्यनुरोधेन 'सः' इत्यनुषं गो द्वितीयपादे। प्रत्यधिकरणं, प्रायेण प्रतिसूत्रं च प्रत्यगात्मब्रह्मणोरभेदं खण्डयित्वा भेदमेव स्पष्टं साधयति सूत्रकारः। इदं च स्पष्टं भावितं श्रीशांकरभाष्य एव दहराधिकरणे। अद्वैतशत्रुं प्रत्यधिकरणं जीवब्रह्मभेदवादिनं सूत्रकारं सुहृदं मन्यते साहस्रीकृदितिमहद्वैपरित्यम्॥

(६०९)—'एतेन मनोब्रह्मेत्युपासीतेत्यादावपि निर्विशेषस्यैवोपास्यत्वमिति सूच्यते' इति साहस्री वदति॥ अहो केयं वैपरित्यकाष्ठा॥

## अथ दहराधिकरणम्

(६११) 'दहराकाशो न ज्ञेयः, किन्तु तदन्तवर्त्येव द्यावापृथिव्यादिकं ज्ञेयं इति पूर्वपक्षः। सिद्धान्तस्तु दहराकाश एव ज्ञेयः इति' इति साहस्र्युक्तं न साधु। दहराकाशस्यैव ज्ञेयत्वं वदन् "दहराकाशो भूताकाशो वा जीवात्मा वा भवति इति पूर्वपक्षयति। 'भूताकाश एव दहरशब्दित इति प्राप्तम्। द्यावापृथिव्यादि च तस्मिन्नन्तस्समाहितम्। अथवा दहरो जीव इति प्राप्तम्।

इति स्वभाष्यवाक्यानि पठतु साहस्री कृत् । 'अस्मिन्कामाः समाहिताः, एष आत्मा अपहतपाप्मा' इति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्य 'अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्कामान्' इति समुच्चयार्थेन चशब्देनात्मानं कामाधारं आश्रितांश्च कामान्विज्ञेयान् वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तस्थैः समाहितैः पृथिव्यादिभिश्च सत्यैः कामैर्विज्ञेय उक्तः इति गम्यते' इति भाष्यनिगमनमपि पठित्वा स्वोक्तंर्भाष्यविरुद्धतां वेत्तु । द्यावापृथिव्यादिसर्वविशिष्टदहरब्रह्मोपासनाविधिरसमत्रानुभवन्ति भगवत्पादाः । चशब्देन कामशब्दवाच्यद्यावापृथिव्यादीनामपि स्थाने विशेषणतया समुच्चय इति भगवत्पादहृदयम् । सहशब्देन तेषां समुच्चयेऽपि विशेषणत्वं चारु व्यञ्जितम । सर्वविशिष्टाद्वैतब्रह्मनुभवरसिकाः भगवत्पादाः इत्यत्र कः सन्देहः ।

(६१४) 'दहराकाशो यदि निर्विशेषं ब्रह्म' इति अनुवदन्ती साहस्री दहराकाशस्य निर्विशेषब्रह्मत्वं मनुते । इदं स्वभाष्यविरुद्धम् । प्रदीपस्य (२४३) पृष्ठे "इदं चाधिकरणं सगुणविषयमेवे" ति स्वोक्तेन व्याहतञ्च ॥

## ॥ अथ देवताधिकरणम् ॥

(६२०)— 'ब्रह्ममीमांसायां सगुणब्रह्मविचारस्यापि प्रतिज्ञातु सगुणस्यापि ब्रह्मणः परमार्थगत्यानिर्विशेषत्वात् निर्गुणब्रह्मभावे परंपरयोपयगिनां सगुणब्रह्मविचाराणां कृतत्वाच्च, न सगुण ब्रह्मविचारोऽनुपपन्नः । सगुणोपासनमपि निर्गुणं ब्रह्माश्रित्यैव फलजनकम्" इति साहस्र्याः विचित्रोवादक्रमः । निर्विशेषज्ञानस्य निर्गुणध्यानोपयोगित्वकथनमुपहास्यमुक्तिमात्रव्याहतं च । सगुणब्रह्मश्चैव निर्विशेष-

मिति स्वाभिमतं पारिभाषिकं नाम चेत् कामं तथास्तु ; किंनश्छिन्नम् । निर्विशेष ब्रह्मण एवान्ततः फलप्रदत्वमिति साहस्रयुक्तिरुपहास्या । स्वमतविरुद्धा च । 'फलमत उपपत्तेः' इत्यधिकरणं सगुणब्रह्मपर-मिति तन्मतम् । "तस्यैव ब्रह्मणः व्यावहारिक्यामीशित्रीशितव्य विभागावस्थायां अन्यस्स्वभावोवर्ण्यते ।," 'फलमतः ईश्वराद्भवितु-मर्हति," 'ईश्वरमेव फलहेतुं मन्महे," 'सर्ववेदान्तेष्वीश्वरहेतुका एव सृष्टयोऽपदिश्यन्ते । तदेव चेश्वरस्य फलहेतुत्वं यत् स्वकर्मा-नुरूपाः प्रजाः सृजतीति" इति तदधिकरण भाषितान्यत्रवेयानि । "नास्यपारमार्थिकं रूपमाश्रित्यैतच्चिन्त्यते, किन्तुसांव्यवहारिकम्" इति भामती । पारमार्थिकं निर्विशेषं रूपं नाश्रित्येति भामती तदा-श्रित्यैवेति साहस्री । सर्वमधरोत्तरमेव ॥

## ॥ कम्पनसूत्रम् ॥

(६६७) 'कम्पनादिति सूत्रस्यैव पूर्वपक्षसूत्रत्वं सिद्धान्त-सूत्रत्वं चेति साहस्री । 'अणिजन्ताभिप्रायत्वे पूर्वपक्षः । णिजन्ताभि प्रायत्वेसिद्धान्तः" इति साहस्रयुक्तिः । इदं सूत्रं प्रमिताधिकरणगुण-सूत्रं, अङ्गुष्ठमात्रप्रमितस्य ब्रह्मत्वसाधकमस्मिन्मते । मध्यपतिताधि-करणानां प्रासंगिकत्वमुभयसम्मतम् । "अवसितः प्रासंगिकोऽधि-कारविचारः । प्रकृतामेवेदानीं वाक्यार्थविचाराणां प्रवर्तयिष्यामः" इति श्रीशांकरभाष्यम् । "तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परि समाप्य प्रकृतस्यांगुष्ठ प्रमितस्य भूतभव्येशितृत्वाद्गतपरमात्म-भावोक्तं भनं हेत्वन्तरमाह-'कम्पनात्' इति" इति श्रीभाष्यम् । नास्ति सूत्रस्यावृत्तेर्वा भिन्नभिन्नार्थकथनस्य वाऽपेक्षाऽस्मद्रीत्या । साहस्री वर्णनस्य नस्रमनानुग्रहभाक्त्वमपि । "सर्वस्य जगतः कम्पनात् परमात्मैव शब्दात्प्रमितः' इति भामतीजगतः कम्पनादित्येव

सिद्धान्तार्थं वर्णयति । "ब्रह्मणो हि बिभ्यदेतज्जगत्कृत्स्नं व्यापारे नियमेन प्रवर्तते" इति भामती ब्रह्मणअपादानात् वाय्वादेर्भीतिं वर्णयति । ब्रह्म भयहेतुरपादानम् । कम्पमानत्वधर्मवाचिका एजति पदघटितकठश्रुतिर्लक्ष्यते सूत्रपदेनेति सर्वेसम्प्रतिपन्नम् । एजतिपदस्य 'कम्पते' इत्येव सिद्धान्तार्थः, न एजयति कम्पयते इति । "एजयितृत्वमपीदं परमात्मन एवोपपद्यते" इति भाष्यवाक्यं न सौत्रपदस्य वा श्रौतैजतिपदस्यवार्थं भाषते यथा साहस्रीकृत् भ्राम्यतीव । ब्रह्मणो जगतः कम्पमानत्वं वा ब्रह्मणो जगत्कम्पयितृत्व- वा भवतु सूत्रसिद्धान्तार्थः, उभयथापि निर्विशेष ब्रह्मविरुद्धमेवेदं लिंगम् । निर्विशेषपरत्वे हेतोर्विरुद्धत्वमप्रकम्प्यम् । "तस्मात् काठक- वाक्यं ज्ञेये (निर्विशेषे) समन्वित" मिति पराभिमतिर्मोघैव । अस्य सूत्रस्य सगुणब्रह्मसाधकत्वमेव । तथैव 'शब्दादेव प्रमितः' इति सूत्रस्यापि ॥

## ॥ ज्योतिर्दर्शनसूत्रम् ॥

(६६९) — "ज्योतिश्चरणाभिधानात्" इत्यनेनाऽस्याधिकरणस्य कथं न गतार्थत्वं इति पृच्छन्तो साहस्रो, 'आत्मा प्रकरणात्' इति सम्पद्याविर्भावाधिकरणसूत्रेण पौनरुक्त्यं न चोदयति । विषयभेदात् इत्युक्तं समाधानं तत्र दुर्वचम् । "परंज्योतिरुपसम्पद्य" इति विषयवाक्यस्योभयत्र एकत्वात् । अंगुष्ठप्रमितविषये "तमेव भान्तमनु- भातिसर्वं तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुत्युक्तज्योतिर्दर्शनादित्य- स्मत्सिद्धान्तव्याख्यानरीतिरेवनिराबाधा ऋज्वी च ॥

## ॥ सुषुप्त्युत्क्रान्तिसूत्रम् ॥

(६७०) — 'सुषुप्त्युत्क्रान्त्योर्भेदेन" इति भेदव्यपदेशः कथमद्वैता विरोधी" इति साहस्रीचोद्यं दुष्परिहरमेव । मुक्तस्यासंसारिणः परमा- त्मभेदोऽत्र साध्यते इति स्पष्टं सूत्राक्षरेभ्यः । 'पत्यादिशब्देभ्यश्च'

इत्यनन्तरसूत्रेणापि स एव स्पष्टं समर्थ्यते । 'सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्' इति सम्प्रतिपन्ना सूत्राक्षरयोजना । कस्य कस्माद्भेदेन व्यपदेशः । जीवात्मनः परस्मात् ब्रह्मणोभेदेन व्यपदेशादिति सूत्रयोजना च सम्प्रतिपन्ना । भेदेन व्यपदेशात् इति हेतुः कथं अभेदसाधको भवेत् । 'पत्यादिशब्देभ्यः' इति हेतुः, तत्परामृष्टत्वेन सम्प्रतिपन्ना 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपः' इति श्रुतिश्च कथं मुक्तपरमात्मनोरभेदं साधयेताम् । 'आकाश इव निर्मल' इत्यादिकविर्दशरथं वर्णयति । निर्मला मुक्ताः । आकाशवाक्यस्य मुक्तात्मन्यस्ति किंचित्स्वारस्यम् । आकाशवाक्यस्य मुक्तात्मपरत्वमाशङ्क्य तस्यापि अधिपतिभूतपरब्रह्मपरत्वं साध्यते । इदं सव विस्तरशो विचार्यनिरूपितमेवास्माभिः सूत्रानुगुण्य-सिद्धिविमर्शे ।

(६८०) — "असंसारिस्वरूपस्य निर्विशेषस्य "सर्वस्य वशी-त्यादिवाक्यगम्यं सविशेषत्वं कथं न विरुद्धम् ।" इति साहस्री चोद्य-मसमाधेयमेव । यदत्रोत्तरं दत्तं साहस्र्या "सर्वस्यवशी" इत्यादि-वाक्यं न विज्ञानमयस्य प्रस्तुतस्य पतित्वं विवक्षति, किन्तु तस्य संसारित्वं व्यावर्तयति । तथा च 'सर्वस्य वशी' इत्यादिवाक्यानि न सविशेषब्रह्मपराणि, किन्तु तत्पदलक्ष्यार्थपराणीति निष्कर्षः । लक्ष्या-र्थत्वं चापतित्वादिव्यावर्तनेनेति भावः" इति तस्य प्रत्यक्षरमुपहास्य-त्वं सुस्फुटम् ॥

"ज्योतिर्दर्शनात्" इति सूत्रस्य शांकरभाष्यप्रदीपाद्युक्तार्थस्य क्लिष्टता सुस्फुटा । "ज्योतिः शब्दं परमेव ब्रह्म दर्शनात्; तस्य हिह वक्तव्यत्वेनानुवृत्तिर्दृश्यते" इति भाष्यम् । 'प्रकृतत्वात्, प्रकृतत्वेन दृश्यमानत्वादिति यावदिति सूत्रार्थः' इति प्रदीपः । तथा चेत् प्रकरणात्' इति हेतुः पठितव्यः । 'आत्मा प्रकरणात्' इति सूत्रस्य शांकरं भाष्यमवधेयम । तत्रैतस्मिन्नेव विषये प्रकरणादिति हेतुः पठितः । 'दर्शनात्'। 'यदतः परोदिवो ज्योतिर्दीप्यते' तद्देवा ज्योतिषां ज्योतिः

इत्यादिश्रुतिषु तत्र ज्योतिः शब्दप्रयोगदर्शनात्" इति वार्तिकम् । तत्र ज्योतिरधिकरणेन कृतार्थता दुष्परिहरा । "ज्योतिश्चरणाभिधानात्' इत्यत्र हि प्रकरणात् ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते । न चेह तद्वत् किञ्चित्स्वार्थपरित्यागे कारणं दृश्यते' इति भाष्योक्तं समाधान-मयुक्तम् । 'प्रकरणात्' इत्येवात्र भाष्यभामतिहेतुः फलतः । परमेव हि ब्रह्मज्योतिः शब्दं कस्मात् । दर्शनात्। तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते इत्यादिकं भाष्यमवधेयम् । इति तृतीयः पादः ॥

## ॥ अथ चतुर्थः पादः ॥

चमसाधिकरणं आनुमानिकाधिकरणं च अस्माभिरन्यत्र निरूपिते । सूत्रानुगुण्यसिद्धिविमर्शे विस्तरेण विचारितान्येतत्पादाधि-करणानि । "परमेश्वराधीनात्त्वियमस्माभिः प्रागवस्था जगतोऽभ्युप-गम्यते । सा चावश्याभ्युपगन्तव्या । अर्थवती हि सा न हितया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति . शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः" इति श्री शांकरभाष्यमस्मदीयं विशिष्टकारणवादमेव सिद्धान्तयति । प्रधानस्य न मिथ्यात्वं सौत्रदर्शने सांख्यदर्शने वा । तच्छब्दवाच्येश्वरा-धीनत्वतदनधीनत्वाभ्यामेव मूलप्रकृतेर्विशेषः । निर्विशेषस्य न कारणत्व-संभवः यथा कश्चिदुच्यते परैः । मिथ्याभूतात्मकस्य ईश्वराधीनत्वान-धीनत्वविचारस्यैव न संभवः । "सूत्रं तु अविद्याकल्पितजीवप्राज्ञभेदा-पेक्षया योजयितव्यं" इति शांकरभाष्यवाक्येन सूत्राक्षराणां स्वोक्त-जीवब्रह्माभेदवादपरिपन्थित्वं स्पष्टमभ्युपगतमार्जवेन । "का तर्हि सूत्रस्य गतिः" इति वार्तिकप्रश्नो दुस्तर एव । "चमसवदविशेषात्' इति सूत्रप्रदर्शितश्रौतदृष्टान्तस्यात्यन्तसामञ्जस्यं प्रदर्शितमस्माभि रस्मद्विमर्शे । "इदं तच्छिरः' इत्यंगुल्याप्रदर्शितं चेतनस्य शिर-श्चमसः । चम्यते भक्ष्यतेऽनेनेति मुख्यं चमसश्चेतनस्य शिरः । तच्च चेत नाधिष्ठितं नेतरच्चमसपात्रवत्तदनधिष्ठितम् । अनेन दृष्टान्तेन प्रकृते

रजायाः भगवच्छरीरत्वमपि व्यज्यते। पूर्वाधिकरणोक्ताऽव्यक्तमेव ह्यजा । "यस्य अव्यक्तं शरीरं" इति श्रुतिरिह भाव्या । अजामन्त्रे बद्धा जीवाः तद्भिन्ना मुक्तजीवाश्च प्रस्तूयन्ते । तदुभयभिन्नः अजानियामकः परमेश्वरश्च प्रस्तूयते ज्योतिरुपक्रमसूत्रेण । "परमेश्वरानुसन्धानात्तु" इत्यादिभाष्यवाक्यमवधेयम् । "भूतत्रयलक्षणैवेयमजा विज्ञेया, न गुणत्रयलक्षणा" इति भाष्यवाक्येन वेदान्त्यभिमताऽजायाः सत्यत्वस्यैव स्वरसता प्रत्याय्यते । एतावतैव सांख्य-वेदान्तयोर्विशेष इति स्पष्टं भाषितम् । अजामन्त्रं ब्रह्मात्ममुक्तात्मवास्तवभेदपरत्वेन यथार्थं व्याख्याय, तदनन्तरं न चेदमाशङ्कनीयं "एकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेणाभिप्रेतः प्राप्नोतीति" इति श्रुतेस्तात्त्विकार्थमनूद्य तदनन्तरं श्रुतिविरुद्धं स्वमतिमात्रेण "न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषया, किन्तु बन्ध-मोक्षव्यवस्थाप्रतिपिपादयिषयात्वेषा" इति भाषितं कस्मै वा आस्तिकाय रोचेत । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति तत्र प्रमाणीकृतः श्वेताश्वरमन्त्रः जीवब्रह्मभेदं सुस्पष्टं साधयति । भूतशब्दः प्राणिवाची । जीवात्मबहुत्वं, तेषामीश्वराधीनत्वं च स्पष्टं निगद्यते तन्मन्त्रेण । एतद्भाष्यवाक्यव्याख्याने प्रदीपः "द्वासुपर्णा" इति मन्त्रमुदाहृत्य "उक्तं चैतत् द्वासुपर्णा" इति मन्त्रेण जीवपरमात्मनोरेव भेदोऽत्र प्रतिपाद्यते, न तु जीवयोः । न ह्येकस्मिन् क्षेत्रे द्वौ क्षेत्रज्ञौ सांख्यानामभिमताविति भावः" इति वदति। तद्व्याख्यायाः असांगत्यं सुस्फुटम् । अजामन्त्रे बद्धमुक्तभेद एव प्रतिपाद्यते, न जीवब्रह्मणोः । "जहात्येनां भुक्तभोगामजोऽन्यः" इत्यत्रोक्तोऽन्यः पूर्वं संसारी भूत्वाऽनन्तरं असंगस्वभावसम्पन्नतयाऽतां विहाय यो बन्धान्मुच्यते, स मुक्तजीवः न नित्यमुक्त ईश्वरः । केयं वञ्चनचातुरी । त्यक्ताजाभोगः न द्वासुपर्णमन्त्रोक्तः अनश्नन्नीश्वरः । "जुष्टं यदा पश्यत्यन्यमीशं" इति श्रुत्या समाने एकस्मिन् शरीर-

दृष्टे शोचत्पुरुषः अनीशो जीवः तदन्य ईश्वरश्च वस्तुतः इति स्पष्टीकृतम् । अयं मन्त्रः श्वेताश्वतरे द्वासुपर्णमन्त्रानन्तरपठितः ।

## ।। नसंख्योपसंग्रहाधिकरणम् ।।

(७२७) 'चमसवदविशेषा' दित्यत्रैव नानुमानिकमित्यनुषंगेण वाक्यार्थे संभवति किमर्थं न संख्योपसंग्रहादिति नञुपपदम इति नाह्नीप्रश्नः अज्ञानैकनिबन्धनः । "न संख्योपसंग्रहादित्यत्र प्रधानादिपुरुषान्तं सांख्यपरिगणितपञ्चविंशतितत्त्वानामपि सशब्दत्वं श्रुत्यभिमतत्वं सांख्यपूर्वपक्षित प्रतिषिध्यते । न आनुमानिकः संज्ञप्रधानमात्रस्य सशब्दत्वम । इदं च स्पष्टीकृतं "न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वं प्रत्याशा कर्तव्या" इति शांकरभाष्यवाक्येन सूत्रार्थभापकेण । संख्योपसंग्रहात् पञ्चविंशतिरपि सांख्यपरिगृहीततत्त्वानि श्रुत्यापि संगृह्यन्ते अतः सांख्यतत्त्वसंख्यानस्य कृत्स्नस्यापि श्रुतिसंगृहीतत्वमस्तीति पूर्वपक्षः । "मुमुक्षुभिर्विज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते" इति श्रीभाष्ये पूर्वपक्षोपन्यासः । अतः 'नानुमानिकं प्रधान' मित्यनुषंगस्यासांगत्यं सुस्फुटम । नापि जगद्वाचित्वाधिकरणे तथाऽनुषंगः । न प्राणिकर्मकर्मशब्दवाच्यम् किन्तु जगत् इति तत्र प्रतिज्ञासूत्रार्थः । 'चमसवदविशेषात्' इत्यत्र उभयवादिसम्प्रतिपन्नमूलप्रकृतिरूपाजायास्तदधीनत्वं वास्वातंत्र्यं नेति विचारः । न मूलप्रकृतितत्त्वसद्भावमात्रे विप्रतिपत्तिः । स्वाज्ञानोद्भावितस्य प्रश्नस्य, "चमसवदविशेषात् इत्यत्र हि मायेवाजेत्यभिमताजापदार्थ इति निर्धार्यते । समन्वयपादत्वात्. नत्वानुमानिकनिरासः, तस्यार्थिकत्वात् । अतो नानुमानिकमित्यस्यानुषंग इति पृथगत्र नञुपदम" इति स्वदत्तमुत्तरमत्यन्तमसमीचीनम् । अत्राजापदं ईश्वराधीनां मूलप्रकृतिं वक्ति, न सांख्याभिमतां स्वतन्त्रां तामिति निर्धार्यत इति भाष्यद्वयेऽप्यर्थः । अत्राऽजायाः

ब्रह्माधीनत्वमेवोच्यते न मिथ्यात्वम् । स्वप्नाधिकरणे यत्र माया-शब्दः प्रयुज्यते सूत्रकृता कृत्स्नेऽपि शास्त्रे । स्वाप्नपदार्थेषु माया-वादो भवतु जाग्रज्जगतो नाभाव एवेति सूत्रकृन्मतम् । इदं च विस्तरेण निरूपितमस्माभिर्भूमिकाविमर्शे । "परमेश्वराधीनेयमवस्था-भ्युपगन्तव्या । तां विना परमेश्वरस्य स्रष्टृत्वं न सिध्यति' इति शांकरभाष्यम् । "तस्मादविरोधस्तेजोबन्नेषु अजाशब्दप्रयोगस्य" इति शांकरभाष्यनिगमनं सत्येष्वेव तेजोबन्नेषु अजाशब्दप्रयोगः वक्ति । "ज्योतिरुपक्रमात्तु" इति सूत्रं सत्यामेवाजामभिप्रैति ॥

## ॥ कारणत्वाधिकरणम् ॥

'आकाशादिषु' इति पदस्य 'कार्यविषयाकाशादिपदघटि-तेषु औपनिषदकारणवाक्येषु इत्यर्थः' । गतिसामान्यं पूर्वं सूचित-माक्षिप्यते । कारणसमर्पकाव्याकृतादिशब्दबलात् प्रधानस्य कारणत्वं पूर्वपक्ष्यते । आकाशादिकारणत्वेन प्रधानं (आनुमानिकं) प्रतीयते, न प्राज्ञः । पूर्वाधिकरणे "यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः" इति वाक्ये आकाशस्य पृथङ्निर्देशः कृतः । आकाशस्य कार्यत्वं सांख्यसंमतम् । ब्रह्मवादिसंमतश्च । आकाशप्राणज्योतिषां सर्वभूतकारण-त्वाभिधायकवाक्यानां आकाशादीतरकृत्स्नकारणत्वपरत्वं न सांख्यस्यापि संमतम् । आकाशतेज आदीनां यत्कारणं, तदवगमक.कारणविषय वाक्यानि किं प्रधानकारणत्वपराणि, उत ब्रह्मकारणत्वपराणीत्यत्र विवादः । "किं असद्वा इदमग्र आसीत्" तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्रासद-व्याकृतशब्दावव्याकृतनामरूपावस्थब्रह्मपरौ, उताव्याकृतपराविति' इत्यादि श्रुतप्रकाशिकोक्तमवधेयम् । "अन्तर्याम्यधिदैवादिषु" इत्यत्रेवात्र 'कारण-त्वेनाकाशादिषु' इति पक्षसमर्पणम् । आकाशादीनां कारणत्वविशेषित-पक्षनिर्देशेन आकाशप्राणादिवाक्यानां पक्षबहिर्भावः । इदं प्रयोजनमिष्यते 'आकाशादिषु' इति सप्तम्यन्तपदेन । कार्यविषयविगानप्रस्तावस्यात्रान-

वसरः एव । एतत्पूर्वाधिकरण एवाकाशस्य कार्यकोटिप्रविष्टत्वमुक्तम् । 'अतिरेको हि भवति आत्माकाशाभ्यां पञ्चविंशतिसंख्यायाः', 'आकाशश्च प्रतिष्ठितः इत्याकाशस्यापि पञ्चविंशतितत्त्वान्तर्गतस्य न पृथगुपादानं न्याय्यम्। इति पूर्वाधिकरणशांकरभाष्यवाक्यान्यवधेयानि। आकाशपदस्य मुख्यतया ग्रहणमपि साभिसन्धि "आकाशादिषु' इत्यत्र स्वतश्चेतनैकान्तात्मशब्दोपेतसत्यज्ञानानन्त ब्रह्मविपश्चिदादिशब्दोपेत प्रकरणस्मारणार्थं "आकाशादिषु" इत्युक्तं इति श्रुतप्रकाशिका ।

एतेन (७३५) "कारणत्वेन चाकाशादिषु इति कारणविषय एव' सिद्धान्तप्रवर्तनात् कार्यविषये पूर्वपक्षसिद्धान्तयोर्न कथमुत्सूत्रत्वम्" इति प्रश्नस्यानवसर एव । कार्यविषयविगानविचारस्यात्राप्रसक्तत्वात् सूत्रानारूढत्वात्, अधिकरणानपेक्षितत्वाच्च । अप्रसक्तेनानावश्यकेन तादृशविचारेणात्र निर्विशेषपरत्वान्वेषणं शशविषाणान्वेषणमेव । सविशेषस्यैव कारणत्वसंभवः इति पुनः पुनर्ब्रवीति प्रदीपः । अत्र वेदान्तानां सविशेषे ब्रह्मण्येव तात्पर्यपर्यवसानमिति "गतिसमान्यादित्यत्र सुस्पष्टं निर्णीतं सूत्रकारेण शांकरभाष्यादिग्रंथैश्च । "यथा भूतोह्येकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः कारणत्वेन व्यपदिष्टः तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते । तद्यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इति । अत्र तावत् ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्मन्यरूपयत् । अपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्" इति शांकरभाष्यमपि आनन्दमयादिकारणवाक्यानां सविशेषचेतनब्रह्मण्येव गतिसामान्यं निरधारयत्, न निर्विशेषचैतन्ये । 'यथा व्यपदिष्टोक्तेः' इति हेतुनिर्धारितं किञ्चित्परामृशेत् । परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः" इत्यनन्तराधिकरणे शांकरभाष्यनिगमनवाक्यम् ॥

॥ जगद्वाचित्वाधिकरणम् ॥

समन्वयाध्यायः समाप्तिमुपयाति । ब्रह्मजिज्ञासोपदेशकतैत्तिरीयवाक्येन शास्त्रमारब्धम् । तत्रोपदिष्टं जन्मादिलक्षणं ब्रह्मणो लक्षणत्वेन

उपनिबद्धम् । तल्लक्षणस्य ब्रह्मणि समन्वयः अनुस्यूततया वर्तते । "कारणत्वेन चाकाशादिषु" इति पूर्वाधिकरणे आकाशादीनां कारणं पुरोवादभूतकारणवाक्येषु यथा व्यपदिष्टं सर्वज्ञमित्युक्तम् । अत्राधिदैवादित्यादि पुरुषाध्यात्ममनोबुद्धिप्राणादीनां, उक्तानुक्तसर्वसमुदायभूतकृत्स्नजगतश्च यः कर्ता स प्राज्ञो ब्रह्मैवेति जन्मादिलक्षणं दृढीक्रियते । अत्र बालाक्यजातशत्रुसंवादः कौषीतकी पठितः साक्षाद्विषयः । "यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" इति प्रतिज्ञासूत्रपरामृष्टं वाक्यं तत्रैव पठितं न समान प्रकरणेबृहदारण्यके । 'ब्रह्मते ब्रवाणि' इति वेदितव्यब्रह्मविषयसंवादोपदेशावत्रोपक्रम एवावगमितौ । वेदितव्यत्वेन प्रक्रान्तस्य ब्रह्मणः बालाकि गृहीतादित्यादिपुरुषेभ्यो भेदः तेषां सर्वेषां किं बहुना एतदिति निर्दिष्टस्य पुरतोवर्तमानस्य कृत्स्नचेतनाचेतनप्रपञ्चस्य यः कर्ता स एव वेदितव्यं ब्रह्मेत्येतत्प्रकरणवाक्यार्थः इत्यत्र निर्णीयते । 'अस्य चिदचिज्जगतः) जन्मादियतः' इति लक्षणसूत्रपरामृष्टतैत्तिरीय लक्षणवाक्यं सद्विद्यादिवाक्यानि च, 'यो वै बालाके यस्य वैतत्कर्म इत्यस्य वाक्यस्य पुरोवादाः । तत्रेवात्रापि सर्वजगत्कारणं ब्रह्म वेदितव्यं, ध्यातव्यम् । पूर्वाधिकरणे सर्वज्ञब्रह्मणः जगत्कारणत्वं सर्वकारणवाक्यप्रतिपादितमित्युक्तम् । 'यथा व्यपदिष्टोक्तेः' इति हेतुना, समाकर्षादिति च । अत्र तादृशकारणस्य वेदितव्यरूपध्येयत्वसाक्षात्कर्तव्यत्वे उच्येते "कारणं तु ध्येयः" इति श्रुतिमनुसृत्य । पुरोवादभूतसद्विद्यावाक्ये, तद्विचारकाधिकरणे च, सति जगत्कारणभूते चेतनानां स्वापकाले अप्यय उक्तः । 'स्वाप्ययात्' इति तत्र सूत्रितम् । प्राज्ञे ब्रह्मण्येव चेतनानां स्वापेऽप्ययः इत्यस्मिन्वाक्ये स्पष्टमुपदिश्यते । एतत्पादीयप्रथमाधिकरणस्य प्राज्ञपदघटितसूत्रात् 'प्राज्ञः प्राज्ञः' इत्यत्र साध्यानुषंगः कार्यः । 'यो वै बालाके' इत्यादिवाक्ये यच्छब्देनादित्यादिपुरुषकर्तृत्वेनोक्तः प्राज्ञ एव न जीवः जगद्वाचित्वात् कर्मशब्दवाच्यचेतनाचेतनकृत्स्नजगत्कर्तुरेतद्वाक्यविवक्षितत्वात्" इति प्रतिज्ञासूत्रार्थः । सुषुप्तः

प्राज्ञे शेते प्राज्ञस्तस्य आधारः इति श्रुतिप्रसिद्धम् । प्राज्ञस्य अत्र जगत्कारणत्वं प्रदर्श्यते इति रसोऽनुभाव्यः । प्राज्ञस्य साध्यपदत्वेनानुवृत्तिः सरसा । अत्र कर्मशब्दस्य पुरोवर्तिवाचकैतच्छब्दनिर्दिष्टकृत्स्नजगद्वाचित्वस्य स्पष्टत्वं पूर्वन्यायैश्च सुगमत्वं च । जन्मादिसूत्रे 'अस्य' इति निर्दिष्टजगत एवात्रैतच्छब्देन ग्रहणम् । एतदिति विशेषितकर्मशब्दस्य प्राणिकर्मजन्यादृष्टवाचित्वमत्र न संभावयितुं शक्यं तथात्वे कर्मशब्दस्य पुरोवर्तिवाचकैतच्छब्दसामानाधिकरण्यायोगात् । 'ब्रह्म ते ब्रुवाणी' ति ब्रह्मविविदिषाऽत्रोपक्रमप्रभृतिप्रक्रान्ता । एतद्वाक्यात्पूर्वं 'मृषावै किल मासंवादयिष्ठाः ब्रह्म ते ब्रुवाणी' ति उक्तमजातशत्रुणा । मृषावादिनमापोद्य बालाकिं ब्रह्मवादिनं । राजा कथमसंबद्धं मिथ्या वा वक्तुमर्हति ' इति भामतीकारिका । ब्रह्म ते ब्रुवाणीति ब्रह्मणोपक्रमात्, "सर्वान्पाप्मनोऽपहत्य-सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यं च पर्येति य एवं वेद" इति निरतिशयफलेनोपसंहारात्, ब्रह्मवेदनादन्यतश्च तदनुपपत्तेः आदित्यादिपुरुषकर्तृत्वस्य च स्वातन्त्र्यलक्षणस्य मुख्यस्य ब्रह्मण्येव संभवात्, अन्येषां हिरण्यगर्भादीनां तत्पारतन्त्र्यात् "क्वैष एतद्बालाके पुरुषोऽशयिष्टक्वैतदभूत् कुत एतदागात्" इति जीवाधिकरणभवनापादानप्रश्नस्य 'यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधाभवति" इत्यादेरुत्तरस्य च ब्रह्मण्येवोपपत्तेः ब्रह्मविषयत्वं निश्चीयते । आत्मैव भवति जीवप्राणानामधिकरणं नान्यत् इति" भामतीवाक्यानि चावधेयानि । प्राणः मुख्यप्राणो वा हिरण्यगर्भो वा भवतु । जीवप्राणभिन्नत्वं तदतिरेकश्च वेदितव्यब्रह्मणोऽत्र स्पष्टं साध्यते सूत्रैः । 'यद्यपि च जीवोनात्मनो भिद्यते तथाप्युपाध्यनवच्छिन्नस्य परमात्मनो जीवत्वेनोपाधिभेदाद्भेदमरोप्याधाराधेयभावो द्रष्टव्यः इति भामत्यामेतदनन्तरवाक्यं एतदधिकरणश्रुतिसूत्रस्पष्टविरुद्धं, प्रधानजीवादिव्यावृत्त्या ब्रह्मणि जगत्कारणलक्षणसमन्वयकारिकृत्स्नाध्यायविरुद्धं केवलाभिनिवेशवशात्स्वबुद्धिमात्रकल्पितमिति परित्याज्यम् । 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च इति सूत्रेऽपीदं विषयवाक्यमिति सम्प्रतिपन्नम् । तत्र 'आत्मनि' इति परमात्मन एव सुषुप्त्यधिकरणस्थानव-

मुक्तम् । यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राणएवैकधाभवति' इतीदमेव कौपीतकीवाक्यमुदाहृत्य "प्राणस्य ब्रह्मत्वं समधिगतं "प्राणस्तथानुगमात्" इति, 'आसु तदानाडीषु सुप्तो भवति' इति छान्दोग्यश्रुतिमुदाहृत्य, 'नाडीद्वारेण ब्रह्मण्येवावतिष्ठते इति प्रतीयते' इति, "तेजसा हि तदा संपन्नो भवति" इति श्रुतिमुदाहृत्य, 'तेजसेति ब्रह्मण एवायं निर्देशः, श्रुत्यन्तरे ब्रह्मैव तेज एव' इति तेजश्शब्दस्य ब्रह्मणि प्रयुक्तत्वात्, ब्रह्मणा हि तदा संपन्नो भवति, ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे हेतुः समधिगतः । एवं च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा सुषुप्तिस्थाने चानुगतो नाडीनां समुच्चयः समधिगतो भवति' इति "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति बृहदारण्यकश्रुतिमुदाहृत्य हृदयाकाशस्य च ब्रह्मत्वं समधिगतं 'दहर उत्तरेभ्यः' इति" इति च परमार्जवेन शांकरभाष्यभाषितान्यवधेयानि । 'आत्मनि' इति स्पष्टं सूत्रेणसर्वे श्रुत्यनुसारेण भेदनियताधाराधेयभाव एव निर्णीतः स्वप्तुर्जीवस्य स्वापस्थानभूतपरमात्मनश्च । इत्थं श्रुतिसूत्रानुरोधेनाधाराधेय भावं सूत्रार्थत्वेन भाषित्वा, अनन्तरं यद्भाषितं" ब्रह्माधारत्वमप्यस्य सुषुप्ते नैवाधाराधेय भेदाभिप्रायेणोच्यते कथं तर्हि तादात्म्याभिप्रायेण, यत आह सतासोम्यतदासंपन्नो भवति स्वमपीतो भवती इति, तदभिनिवेशमात्रप्रयुक्तमित्युपेक्ष्यमेव । 'सति सम्पद्य स त आगम्य सता हि सम्पन्नोभवति तेजसा हि संपन्नो भवति परं ज्योतिरुपसंपद्य" इति सर्वैर्विविधकारकसम्बन्धोभेदनियतः श्राव्यते । यदि कस्यचित् स्वाप्ययसूत्रात् कश्चित् संशयो जायते तन्निवृत्तिः क्रियतेऽनेनाधिकरणेन सूत्रैः श्रुत्या च । जीवमुख्य प्राणमात्रं व्यावर्त्य तद्भिन्नब्रह्मणो जगत्कारणत्वं जीवसुषुप्त्यधिकरणात् च स्पष्टमत्र निर्णीयते । यथा कौषीतकिनः प्रातर्दनविद्यायां प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः इति पठितं तथात्र एवमेष प्रज्ञात्मा एतैरात्मभिः भुंक्ते एवमेतमात्मानमेते आत्मानो भुञ्जन्ति' इत्युक्तम् । उभयत्र प्रज्ञात्मा प्राज्ञः परमात्मा । अतः प्रबोधोऽस्मात्' इति सूत्रमपीह भाव्यम् ।

समानप्रकरणे बृहदारण्यके 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैषतदाभूत् कुत एतदागात्' इति प्रश्नः, 'यत्रैष एतत्सुप्तोभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते, तानि यदा गृह्णाति अयं ह्येतत्पुरुषः स्वपिति नाम" इत्युत्तरं च सुप्तजीवात्म, तत्स्वापाधिकरणभूतदहराकाशब्रह्मणोश्च भेदं करतलामलकवत्स्पष्टयतः । 'विज्ञानमयो हि शारीरः' इति भगवत्पाद-भाष्यम् । अत्र विज्ञानमयात् शयानात् शयनरूपपरमात्मनोभेदमुक्त्वा, अनन्तराधिकरणे विज्ञानमयान्यतदन्तरानन्दमयस्य कामनयैव पतिजाया-दीनां प्रियत्वरूपानुकूलत्वानन्दत्वादिकमिति "एष ह्येव (आनन्दमय एव) आनन्दयाति" इत्यानन्दमयश्रुतिव्यञ्जितमुपपाद्यते । यथा स्वाप्ययसूत्र-व्यञ्जित सद्ब्रह्मणो निर्दुःखसुखप्रदत्वं, अनन्तरानन्दमयाधिकरणे सम्यगुप-पादितं, तथात्रापि एतदधिकरणव्यञ्जितं वात्सल्यनिधेर्ब्रह्मणः स्वसंश्लेषेणा-नन्दप्रदत्वमनन्तराधिकरणवाक्येन विस्तरशः उपपाद्यते । अध्यायान्ते सकलकारणवाक्यानां ब्रह्मकारणत्वे तात्पर्यं कारणभूतपरब्रह्मणः स्वनिरन्तर-संश्लेषेण, दुःखासंमिश्रनिरतिशयसुखरसप्रदत्वं चैतदधिकरणेन स्पष्टी-क्रियते । "अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञो नाभिधीयते । अपितु निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते । कुतः 'यस्य वैतत्कर्म' इत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात्" इति श्रीभाष्ये सूत्रार्थो भाषितः । "तस्मादत्र जीवमुख्यप्राणशङ्का उत्पद्यमाना निवर्त्यते" इति, "परस्मात् ब्रह्मणः प्राणादिकं जगज्जायते इति वेदान्त-मर्यादा । ......अपि चैवमेके शाखिनोवाजसनेयिनोऽस्मिन्नेववालाक्य-जातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मा-नमामनन्ति, "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्' इति प्रश्ने । प्रतिवचनेऽपि य एषोन्तर्हृदय आकाशस्तस्मिन् शेते' इति आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोस्मिन्नन्तर आकाशः' इति ।" इति द्वितीयतृतीयसूत्रार्थभापकेन शांकरभाष्येण प्राणजीवभिन्नत्वं ब्रह्मणः

सूत्रकारसाधितमिति स्पष्टीकरोति । तद्विरोधेन श्रुतिविरोधेन "जीवलिङ्गमप्युपक्रमोपसंहारयोः ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम्" इति स्वमनीषामात्रभाषितं कथं प्रीणीयात् । 'बृहन् पाण्डरवासाः सोमराजन्' इत्यादि प्राणामन्त्रणैर्यथा प्राणब्रह्मभेदः स्फुटीकृतः, तथात्र 'सुप्तपुरुषः जीवात्मा, क्वायिष्ट' इति प्रश्नेन 'अथास्मिन्प्राण एवैकधा भवति" इति प्रतिवचनेन च जीवब्रह्मभेदः स्फुटीकृतः श्रुत्या । "प्राणस्य प्राणभाजोऽप्यधिकरणतया जीववाक्योक्तरीत्या ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौमी" इति सारावली । "जीवमुख्यप्राणकीर्तनं तयोराधारभूतस्य परमात्मनोज्ञापनार्थम्" इति पदयोजना ।

(७४६) — 'सुषुप्तिकाले च परेणब्रह्मणा जीवः एकतां गच्छतीति तु न जैमिनिमतं, यतोजैमिनिः कार्याधिकरणे गतिप्राप्यत्वं ब्रह्मणो वदति । न चैकत्वे स उपपद्यते' । इति अन्यार्थं तु जैमिनिः इति सूत्रविवरणावसरे एवमनुवादो नोपपद्यते' इति पृष्ट्वा, 'गतिप्राप्यत्वं हि जैमिनिर्मुक्तावपि मन्यते सुषुप्तावपि । सुषुप्तौ तु विनापिगतिं ब्रह्मणा एकतां गच्छतीत्यङ्गीकारेऽपि न दोषः" इति विचित्रमुत्तरयति । "परंजैमिनिः मुख्यत्वात्' इत्यादि जैमिनिपक्षसूत्रेषु प्रकृतिमण्डलातीतानुत्तमज्योतिर्लोकस्थपरब्रह्मप्राप्तावेवार्चिरादिगतिरमानवकर्तृकनयनं चोक्तम् । अपि च 'प्रजापतेस्सभांवेश्म प्रपद्ये' इति नायं कार्यविषयः प्रतिपत्त्यभिसन्धिः, कार्यलक्षणस्यैव परब्रह्मणः प्रकृतत्वात्" इति शांकरभाष्यम्, 'तेन परब्रह्मण्यपि वेश्मप्रतिपत्तिशब्दसाम्यात् गतिपूर्वकत्वं तस्याः सिद्ध्यतीत्यर्थः' इति रत्नप्रभा च । 'तदपराजितापूर्ब्रह्मणः 'प्रभुविमितं हिरण्मयं' इत्युक्तं परमव्योमस्थपरात्मनोऽर्चिरादिगतिद्वारा प्राप्यत्वमुक्तम् । हार्दपरमात्मनि सुषुप्तेः कावाऽर्चिरादि गत्यपेक्षा । मरणकाले देहादुत्क्रान्तस्य खल्वतिवहनमर्चिरादिगत्या । सुषुप्तावपि हार्दब्रह्मणो अर्चिरादिगतिप्राप्यत्वं" इति साहस्रयुक्तिर्विचित्रविचित्रा । "सुषुप्तौ ब्रह्मणैकतां गच्छतीत्यस्य कोऽर्थः । किं ब्रह्मैव भूतः । तथा चेत् कथं

सः अमुक्तोभवेत् । अव्ययरूपाविभागश्चेत्, कामं भवतु । यथा सुषुप्तिप्रलययोरविभागो नैवयं तथैव मुक्तावपीति सुस्पुटम् ॥

(७४७) — सगुणब्रह्मभावोमुक्तानां सुषुप्तानां ब्रह्मभाव एवेति तु बादरायणस्यापि मतमेव" इति साहस्रयुक्तिः कं वा न विस्मापयेत् । 'ब्रह्मभावः सुपुप्तैः प्राप्यते' इति विचित्रं साहस्रीमलिनं बादरायणे आरोपयिष्यते । "वीतरागभयक्रोधाः मन्मना मामुपाश्रिताः । बहवोज्ञानतपसापूता मद्भावमागताः" इति भगवान्। सुपुप्तो ब्रह्मभूत इति साहस्री ।

(७४९) — 'अस्मिन्नंशे जैमिनिमतमेव बादरायणस्यापिमतं' इति वदन्ती साहस्री जीवब्रह्मभेदमेव बादरायणमतत्वेन द्रढयति । 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति सूत्रेण मुक्तौ अपहतपाप्मत्वादिगुणाष्टकैश्वर्यं भवति मुक्तस्येत्युक्तं जैमिनिमतत्वेन । मुक्तौ जीवब्रह्मभेदः, ब्रह्मसदृशब्राह्मरूपलाभश्चोक्तः । तदेव बादरायणमतम् । इत्थं त्र उभयोर्मतस्यैक्यकथनमस्मत्सिद्धान्तमेव प्रतिष्ठापयति ।

---

## ॥ वाक्यान्वयाधिकरणम् ॥

पूर्वाधिकरणे कर्मपदस्य जगद्वाचित्वोक्त्या वाक्यस्य जगतो ब्रह्मकारणत्वपरत्वमुक्तम् । अत्र कृत्स्नस्यापि ब्राह्मणस्यालोडनेन पतिजायादीनां सुखत्वं सुखप्रदत्वं च परमात्मकामायत्तं, सर्वात्मभूतानन्दमयपरमात्मांशत्वप्रयुक्तमित्यत्र प्रदर्श्यते । "एषह्येवानन्दयाति', 'रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति", 'एतस्यैवानन्दस्य मात्रामुपजीवन्ति' इत्यादि श्रुतिभिः सावधारणं सर्वानन्दानां परमात्महेतुकत्वमुक्तम् । "तद्धेतुव्यपदेशाच्च" इत्यानन्दमयाधिकरणसूत्रमप्यवधेयम् । पतिजायादीनां प्रियीभवनं, आत्मशब्दवाच्यपरमात्मकामनया भवति । एताः प्रजाः तत्तत्सुखमनुभवन्तु इति परमात्मा कामयते। अस्मत्सुखं स

कामयते, मातापित्रादिवत् । ईदृशः परमात्मस्वभावः, 'उत्सवेषु च सर्वेषु पितेव परितुष्यति' इति रामगुणवर्णनेनोपबृंहितः । आनन्दमय-परमात्मानन्दस्वभावत्वमेव स्वतोवस्तुतः सर्वैर्विश्वचिताम् । परमात्म-संश्लेषेण निर्दुःखसौपुष्कलानन्दावाप्तिः पूर्वाधिकरणवाक्ये प्रदर्शिता । ब्रह्म-संस्पर्शजं सुखमेव दुःखामिश्रं भवेत् । 'ये तु संस्पर्शजादोषाः दुःख योनय एव ते । आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः", "सुखेन ब्रह्मसंस्पर्शं सुखमत्यन्तमश्नुते" इति गीतं भगवता । "जीवात्मवात्र द्रष्टव्यत्वेनोपदिश्यते" इति पूर्वपक्षः, "मैत्रेयींप्रति याज्ञवल्क्येन परमात्मैव द्रष्टव्यत्वेनोपदिश्यते. कुतः?, वाक्यान्वयात्, एतस्य वाक्यस्य प्रतिपदं-प्रत्यवांतरवाक्यं च ब्रह्मण्येवान्वयोदृश्यते, नान्यत्र" इति सिद्धान्तश्च प्रदर्शितौ वार्तिके । इयमेवास्मद्रीतिः । "वाक्यं हीदं पौर्वापर्येणावेक्ष्य-माणं परमात्मानं प्रत्यन्वितावयवं दृश्यते" इति शांकरभाष्यम् । "यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति, तं मिथ्यादर्शिनं, तदेवमिथ्यादृष्टं जगत्पराकरोति इति भेददृष्टिमपोद्य, 'इदं सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्य परमात्माव्यतिरेक-मवतारयति" इति शांकरभाष्यमस्मदिष्टमेव भाषते । "परमात्मनो अन्यत्र स्थितं, न तु परमात्मनि स्थितं स्वनिष्ठं यो वेद, तं स ब्राह्मणादिवर्ण एव पराकुर्यात् अभिभवेत् । आत्मनोन्यत्वेनाब्रह्मात्मकत्वेनावगतो ब्राह्मणादिवर्ण एव, तं तथावगन्तारं संसारयतीत्यर्थः । अतः सर्वस्य ब्रह्मात्मकत्वमेव स्वरूपम् । अब्रह्मात्मकत्वप्रतिपत्तेः संसारहेतुत्वोक्त्या मिथ्याज्ञानत्वसिद्धिरिति द्रष्टव्यम्" इति श्रीरंगरामानुजमुनयः । सदा-सर्वात्मकैकब्रह्मदर्शनमेव विशिष्टाद्वैतदर्शनम् । "अन्यश्च, राजन्स-परः स चान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्तिह्येक एवेति साधवः इति साधूनां दर्शनमिति मोक्षधर्मे याज्ञवल्क्यवचनम् । "अवस्थितेः', इति चरमसूत्रेण पतिजायादीनां प्रियत्वरूपानन्दयितृत्वं, आत्मशब्दमुख्य-वाच्यान्तर्यामिणः आत्मतयाऽन्तरवास्थितिनिबन्धनं, तत्संस्पर्शनिबन्धन-

मित्यपि चतुरं व्यज्यते । इदं व्यञ्जितं श्रुत्या 'इदं सर्वं यदयमात्मा' इति परमात्मनस्सर्वसामानाधिकरण्योक्त्या । परमात्मनोऽन्यत्र ब्रह्मक्षत्रादीनामवस्थितत्ववेदनं न कार्यमिति निर्बध्यतेऽत्रोपनिषदा । "इदमपि सूचितं" "अवस्थितेः" इत्येकत्वव्यपदेशनिमित्तत्वेन । पत्यादीनां तच्छरीराणां च परमात्मात्मकत्वज्ञानपूर्वकं तेषामात्मभूतसर्वात्मपरमात्मसंश्लेषे विशुद्धमनसा विषयीकृते निरतिशयानन्दावाप्तिर्भवेत् । 'वाक्यान्वयात्' इति प्रथमप्रतिज्ञासूत्रेण जीवं व्यावृत्त्य तद्भिन्नः परमात्मा प्रकरणित्वेन निर्धारितः इति सर्वसंप्रतिपन्नं सुस्फुटञ्च । तदविरोधेनैव "अवस्थितेः" इति सूत्रस्यार्थो ग्राह्यः । "न च ब्रह्मणोऽन्योगुहायां निहितोऽस्ति" इति शांकरभाष्यं गुहामन्त्रसूत्राभ्यां प्रतिषिद्धं भवति । ब्रह्मणोऽपृथक्सिद्धत्वेन तदनन्य एव जीवात्मा ।

---

## ॥ प्रकृत्यधिकरणम् ॥

"प्रकृतिश्च उपादानकारणं च प्राप्तो ब्रह्म, न निमित्तकारणमात्रम् । एकविज्ञानेन सर्वविज्ञान प्रतिज्ञायाः तदुपपादकमृदादिदृष्टान्तानां चानुपरोधात् ।" इति सूत्रार्थस्सर्वसंमतः पूर्वसूत्रात् 'अवस्थितेः' इति पदस्यावृत्तिरिष्यत इव सूत्रकारेण । "अवस्थितेरुपादानकारणत्वमिति तदाशयः । तत्तदनुप्रविश्य तत्र तत्रावस्थायैवोपादानं भवति ब्रह्म । स्वयं च तत्र तत्रकार्येऽवस्थानमेवस्वस्य कार्यत्वम् । 'तदनु प्रविश्य सच्चत्यच्चाभवत् ।' 'अनुपरोधात्,' श्रौतप्रतिज्ञायाः, तदुपपादनार्थमुक्तानां श्रौतदृष्टान्तानां चोपरोधो न न्याय्यः । अतः अनुपरोधो हेतूक्रियते, नात्यन्तानुरोधः । नहिदृष्टान्ते सर्वथा साम्यं संभवेत्, नापीष्यते । "वृद्धिह्रास भाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च" इति सूत्रं स्मर्तव्यम् । मृदादीनां जडत्वमस्ति, कारणस्य अव्यक्तनामरूपचिदचिद्विशिष्टब्रह्मणः विशेष्यांशेवा चिद्रूपविशेषणांशेवा न जडत्वम् । "अनुरोधात्"

इति न सूत्रितम् । "अत्र सेश्वरप्रधानकारणतावादस्य श्रुतिमत्त्वं निराक्रियते" इति वार्तिकम् । "एवं निरीश्वरसांख्ये निरस्ते सेश्वरसांख्यः प्रत्यवतिष्ठते ।" इति श्रीभाष्यम् । "अनुरोधात्" इति सूत्रणे मृद्दृष्टान्तानुरोधेन प्रकृतेरेव परिणाम्युपादानत्वसंभवः, न प्राज्ञस्य तत्संभवः इति पूर्वपक्ष्युनुकूलो भवेद्धेतुः । ब्रह्मणः उपादानत्वसाधनेन कार्यस्य चिदचित्प्रपञ्चस्य ब्रह्मात्मकत्वं सिद्ध्यति । आनन्दब्रह्मात्मकप्रपञ्चस्य वस्तुतोऽनुकूलस्वभावत्वमिति तेन सिद्ध्येत् । अनेन, पूर्वाधिकरणेन स्वरसा संगतिः सिद्ध्यति । सर्वोपि प्रपञ्चो वस्तुतोऽनुकूलस्वभाव एव । सर्वस्य ब्रह्मात्मकत्वानुभवे सर्वस्यापि प्रियत्वं सिद्ध्येत् । सर्वस्य ब्रह्मस्वभावभूतानुकूल्यस्वभावत्वं भगवत्पादैरुक्तं "ब्रह्मस्वभावोहि प्रपञ्चः न प्रपञ्चस्वभावं ब्रह्म" इति । 'सर्वस्याप्यानुकूल्यं स्वत इह जगतो वासुदेवात्मकस्य व्यक्तिं तन्मुक्तिकाले भजति भवकृतज्ञानसंकोचहानेः" इति तत्त्वमुक्ताकलापः । उभयविभूतिविशिष्टं ब्रह्म मुक्तानुभाव्यम् । ब्रह्मणो यथा सर्वमनुकूलमेव, तथा सर्वकर्मनिर्मुक्तानां मुक्तानामपि । प्रपञ्चस्य स्वतोऽनुकूलस्वभावत्व एव तत्सिद्ध्येत् । "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति" इति श्रुतिः, एतदधिकरणेन आनन्दप्रपञ्चविशिष्टानन्दरूपप्राप्ये समन्विता भवति । दृष्टान्तेषु त्रिष्वपि उपादानोपादेययोः सत्यत्वमेव । 'मृत्तिकेत्येव सत्य' मिति उपादान भूतमृदः सत्यत्वमेव श्रुतिमतम् । दार्ष्टान्तिके तदुपरोधो न न्याय्यः । अभ्यस्त सत्यत्व श्रुत्युपरोधा च मृदुपादेयानां कार्याणां सत्यत्वमेवेति स्पष्टं श्रुतिहृदयम् । अत्रैवोत्तरत्राभ्यस्यते नवकृत्वः "ऐतदात्म्यमिदं सर्वं तत्सत्यं" इति । सर्वस्यापि कार्यचिदचित्प्रपञ्चस्य ब्रह्मप्रकारत्वं सत्यमित्येव श्रुतिहृदयं स्पष्टम् । दृष्टान्तवाक्यैरपि तदेवोच्यते । विवर्तवादान्तु रूपात्रयोऽपिदृष्टान्ताः? दृष्टान्तानामत्यन्तोपरोध एवस्यात् विवर्तवादे । कार्यस्य सत्यत्वोक्तिर्वा, कार्यस्य कारणप्रकारत्वस्य सत्यत्वोक्तिर्वा कार्यमिथ्यात्ववादबाधिकैव । दृष्टान्ताननुरोधोपरोधौ स्पष्टौ विवर्तवादाश्रयणे ।

परिणामदृष्टान्ता एकत्रयोऽपि । परिणामदृष्टान्तत्रय प्रदर्शनं परिणामपक्षस्यैव श्रुतिहृदयत्वं स्पष्टयति । "परिणामात्" इति सूत्रं च तदेव दृढयति । नैकस्मिन्नपि सूत्रे ऽ न मिथ्यात्वस्य कथा दृश्यते । सद्विद्यायां कार्यविषये सत्यं सत्यमित्येव भूयो भूयो निगद्यते । 'परिणामात्' इति सूत्रयन्सूत्रकृत् विवर्तवादस्य परिपन्थीति स्पष्टम् । विवर्तवादं मनसि कुर्वन्, 'परिणामात्' इति परपक्षत्वेन प्रसिद्धं परिणामपपक्षं स्वपक्षत्वेन सूत्रयामासेति वर्णनमुपहास्यम् । कार्यसत्यत्ववादी परिणामवादी च पूर्वपक्षी सेश्वरसांख्यः, परिणामपक्ष एव सिद्धान्तिपक्षः, यथा पूर्वपक्षिणः । उपादानकारणत्वमात्रे पक्षयोर्भेदः । न जगत्सत्यत्वविषये । 'असत्यं ते जगदाहुः' इति गायन् भगवान् जगत्सत्यत्वमेव सम्मतत्वेनागायत् । मृद्विकाराणां नासत्यत्वम् । "यथा पृथिव्यामोषधयः संभवन्ति" इति भगवत्पादभाष्योपात्तमुण्डकदृष्टान्तोऽपि कार्यसत्यत्वमेव द्रढयति । "अभिध्योपदेशाच्च" इति सूत्रं सगुणं ब्रह्मैव निमित्तत्वेन प्रकृतित्वेन चाभिप्रैति । "बहुस्यामिति" इति बहुभवनसंकल्पः अत्राभिध्यानशब्दादार्थः इति भगवत्पादभाष्यम् । समानोऽस्मद्भाष्यार्थः । उपदेशपदेन अभिध्यारूपसंकल्पस्य सत्यत्वमेव स्पष्टीक्रियते । "साक्षाच्चोभयाम्नानात्" इति सूत्रस्य "आकाशवाक्येन प्रभवप्रलययोः ब्रह्मण एव कारणत्वाम्नानात्' इति शांकरभाष्यार्थः । "सर्वाणि ह्वा इमानि भूतानि समुत्पद्यन्ते' इति सर्वेषां सत्यत्वमुत्पाद्यमानत्वं चाकाशवाक्यं निजगाद । यथा व्रीहियवादीनां पृथिवी ' इति तत्र शांकरभाष्यभाषणम् । दृष्टान्तो न विवर्तदृष्टान्तः । "ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवीनिष्टतक्षुः । मनीषिणो मनसा विब्रवीमिवोब्रह्माध्यतिष्ठत् भुवनानि धारयन्" इति मन्त्रे ब्रह्म उपादानत्वेन साक्षादेवाम्नायते' इत्यस्मद् भाष्यार्थः । आम्नातस्य हेतूकृतस्यासत्यत्वं दुर्वचम् । परिणामसूत्रे 'विकारात्मना च परिणामो मृदाद्यासुप्रकृतिषूपलब्धः" इति शांकरभाष्यं परिणामपक्षमेव सिद्धान्तत्वेन स्फोरयति । 'योनिश्च हि गीयते' इति

सूत्रं कार्यसत्यत्वमेव स्पृष्टयति । कल्पितस्याध्यस्तस्य योनिं कोवा ब्रूयात् । विकारशब्दश्च न भ्रान्तिकल्पितवाची । "पृथिवीयोनिरोपधिवनस्पतीनां" इति भगवत्पादोदाहृता श्रुतिः मिथ्यात्वपक्षपरिपन्थिनी । "स्त्री योनेरप्यस्त्येवाद्वारेण गर्भं प्रत्युपादानकारणत्वम्" इति शांकरभाष्य-वाक्यं कल्पितत्वरूपविवर्तपक्षं निगृह्णाति । "यथोर्णनाभिः सृजते गृह्णते च इति भाष्योपात्तमुण्डकदृष्टान्तोऽपि सत्यकार्यदृष्टान्त एव, न विवर्तवाद-दृष्टान्तः । 'एवं प्रकृतित्वं ब्रह्मणः प्रसिद्धम्' इति भाष्यं परिणामपक्षमेव श्रुति-सूत्रप्रसिद्धतया भापते । "पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानम्" इति भाष्यमपि परिणामपक्षमेव सिद्धान्तयति । पूर्वसिद्धं विशिष्टमेव । विशेषणानि पूर्वसिद्धान्येव । परिणमयामासेति प्रपञ्चस्य ब्रह्मकर्तृकत्वभाषणं तस्य जीवकल्पितत्ववाद-निहन्तृ । 'आत्मकृतेः' इति सूत्रमपि तन्निहन्तृ । परस्परविरुद्धौ परस्परभिन्नौ विवर्तपरिणामवादौ । सूत्रं शांकरभाष्यं च परिणाममेव स्वपक्षत्वेन वदतः । का प्रत्याशात्रविवर्तवादस्य । "परिणामात्' इति सौत्रपदस्य वार्तिके भामत्यां च विवर्ताभिप्रायतया प्रयुक्तत्वकथन-मुपहास्यम् । किं प्रतिपक्षवादवाचकशब्दं स्वपक्षवाचकत्वेन प्रयुञ्जीयात कोऽपि वादी । अत्र श्रौतदृष्टान्तानुपरोधो निर्बध्यते सूत्रकृता । सर्वेपि दृष्टान्ताः अकल्पितसत्यपरिणामदृष्टान्ता एव, इदमेकमेवालं विवर्तवादस्य श्रुतिसूत्रबाह्यत्वनिरूपणाय । निमित्तत्वं निर्गुणस्यासंभवि, तथैव प्रकृतित्वमपि । 'साक्षाच्च' इति सूत्रपदाभ्यां शरीरद्वारा सद्वारको-पादानत्वं च स्फोर्यत इव । 'अद्वारकं सद्वारकं च' । 'तस्मात्कर्तापिदेवः प्रकृतिरपि भवेत् सर्वतस्त्वान्तरात्मा" इति सारावली "अवस्थितेः' इति पदस्यानुवृत्तिं स्फोरयतीव । अन्तर्यामि ब्रह्मणं प्रत्यभिज्ञापितमवास्थिति सूत्रेण ॥

(७७२) — "प्रकृतिश्च' इति च शब्देन निमित्तकारणत्वस्यापि संग्रह इति नयुक्तं, निर्विशेषचैतन्ये केवल निमित्तकारणत्वस्यैवासंभवात्' इति साहसमुद्भावितं चोद्यं दुष्परिहरमेव ।

(७७४) — 'अत्र सांख्यानां परिणामवादनिरासो भवति' इति साहस्र्युक्तिरुपहास्या', उक्तिमात्रव्याहता च । परिणामात् इति सौत्रहेतुः परिणामवादनिरासक इति को वा ब्रूयात् । विरुद्धहेतुं को वा शास्त्रकर्ता उपाददीत ।

(७८०) — 'मृत्तिकादृष्टान्तः कथं विवर्तोपादानतापक्षं समर्थयेत' इति साहस्रीचोद्यं दुष्परीहरमेव । 'प्रकृत्यधिकरणेऽत्र परिणामपदं विवर्तादिपरं, दृष्टान्ते मृत्तिकापदन्तु विवर्तोपादनस्यापि प्रकृतिपद-व्यवहार्यत्वमुक्ताधिकरणसिद्धमभिप्रेत्यैव" इत्युत्तरं दुरवबोधम् । मृत्तिका-शब्दः, तद्दृष्टान्तश्च श्रुतिपठितः । मृत्तिकापदं मृत्तिकावाच्येव । विवर्तोपादानतावाचिसूत्रपरिणामपदस्य विवर्तवाचकत्वे वार्तिकप्रमाणो-दाहरणमुपहास्यम् । परिणामशब्दोऽत्र विवर्तमभिप्रेत्यप्रयुक्तः इति द्रष्टव्यम इति वार्तिकवाक्येन परिणामपदस्य विवर्तावाचकत्वमभ्युपगम्यत एव । विवर्तमभिप्रेत्य तद्विरुद्धपरिणामवादवाचकशब्दं प्रयुयुजे सर्वज्ञः सूत्रकार इति कथनमुपहास्यम् ।

(७९३ — 'जन्माद्यस्य यतः इति सगुणेनोपक्रमः, प्रकृतिश्चेति सूत्रेणापि परिणामकारणेन सगुणेनैवोपसंहारः प्रथमाध्यायस्य, न केवलं प्रथमाध्यायस्य, किन्तु शास्त्रान्त्याधिकरणस्यापि जगद्व्यापारवर्जं' इत्यस्य सर्वस्याब्रह्ममीमांसायाः सविशेषब्रह्मण्येव पर्यवसानमिति वक्तव्यम् । इति साहस्री प्रश्नवाक्यवर्णनेन स्वनिर्विशेषब्रह्ममतस्य सूत्रशास्त्रबाह्यतां तद्विरुद्धतां च सहेतुकमुपपादयति । 'जन्माद्यस्येति सगुणेनोपक्रमः, जगद्व्यापारवर्जमित्युपसंहारश्च, 'स एको ब्रह्मण आनन्दः, इति वाक्यस्येव सगुणब्रह्मपर्यन्तमेव वाङ्मनसयोः प्रवृत्तिः निर्विशेषन्त्ववाङ्मनसगोचर-मित्यभिप्रेत्य, न तु वस्तुगत्येति ब्रह्ममीमांसायाः सगुणब्रह्मद्वारेण ब्रह्मपरतया, निर्विशेषब्रह्मोपलक्षणविधया सविशेषपरत्वेपि नाद्वैतापर्य-वसानम्" इति तद्दत्तमुत्तरमापादचूडं कृत्स्नस्यापि सूत्रशास्त्रस्याभिधा-विधया सगुणब्रह्मणः एव प्रतिपादकत्वं स्पष्टमभ्युपगच्छति । निर्विशेष-

ब्रह्मोपपादनं न कुत्रापि शब्दतः क्रियते इत्यप्युक्तं भवति । स्पष्टसूत्राक्षर-विरुद्धं वयं अस्मदभिमतनिर्विशेषत्वं कल्पयामः इति वादी कथकगोष्ठी-बाह्य एव । 'स एको ब्रह्मण आनन्दः' इति वाक्यं परब्रह्मानन्दमेव वक्ति । 'यतो वाचः' इति श्रुतिः पूर्वार्धे वाङ्मनसयोर्निवृत्तिं वदन्तीतस्य सुवचता-सुग्रहता च नास्तीत्यभिप्रैति । 'आनन्दं ब्रह्मणो विद्वान् अभयरूपं फलं लभते' इत्यनुपदमेव निगदन्ती श्रुतिः मनसा तस्य वेदनं तद्वेदनफल-रूपाभयप्राप्तिं च स्पष्टं शास्ति । इदं सर्वं पूर्वमेव सुविस्तरमुपपादितम् । असिद्धेनासिद्धं सिषाधयिषति साहसी । "सूत्रैरेतैः स्फुटार्थैः सविषय-विषयैः निर्विशेषैक्यपक्षे मुख्येक्षाद्यैः स्वधर्मैः प्रकृतिपुरुषतो भेदवादः कथं स्यात्" इति सारावली पूर्वविमर्श एवोदाहृतास्माभिर्विस्तरशो-व्याख्याता च । प्रत्यधिकरणं जीवब्रह्मभेदसाधनं तद्विरुद्धं जीवैक्यं लक्षयेत्किमिति अस्मत्सुहृदं पृच्छामः ॥

## ॥ सर्वव्याख्यानाधिकरणम् ॥

एतावताप्रबन्धेन जीवब्रह्मभेद एव साधितः, अव्याख्यातानां वाक्यानां अमुनैव न्यायकलापेन जीवब्रह्मभेदपरत्वमेवाभिप्रेयते सूत्रकृता । वाक्यान्तराणामपि एतावत्पर्यन्तमुपपादितसगुणब्रह्मपरत्वमेवानेनाधिकरणेन निर्णीयते ॥

---

## ॥ द्वितीयाध्यायः ॥

## ॥ प्रथमपादः ॥

## ॥ स्मृत्यधिकरणम् ॥

सन्त्यस्याधिकरणस्य पूर्वाध्यायेन पूर्वपादेन पूर्वाधिकरणेन च स्वरसाः संगतयः । सर्ववेदान्तालोडनेन ईश्वरेपरब्रह्मणि जन्मादिलक्षणस्य समन्वयः प्रत्यपादिपूर्वाध्याये । ब्रह्मणोनिमित्तकारणत्वमुपादानकारणत्वं च तत्र प्रत्यपादि । ब्रह्मणः उपादानकारणीभवने ब्रह्मविशेषणतया

तदधीनाप्रकृतिरप्युपादानत्वेनाङ्गीकृता । 'तदधीनत्वादर्थवत्', 'ज्योति-रुपक्रमात्तु तथा ह्यधीयत एके', 'प्रकृतिश्च' इत्यादि सूत्राणि भाव्यानि।

पूर्वाध्याये निरूपितमत्राक्षिप्यते कापिलस्मृत्यवलम्बनेन प्रधानस्य स्वातन्त्र्येण ईश्वरानधिष्ठितत्वेन प्रपञ्चं प्रत्युपादानत्वोक्त्या, ईश्वरा-सिद्ध्युक्त्या च । 'ईश्वरासिद्धेः' इति सांख्यसूत्रम् । मूलप्रकृतिः पुरुषस्य भोगापवर्गार्थं स्वतः प्रवर्तते, स्वातन्त्र्येण जगद्रूपतया परिणमते चेति श्रुतिप्रशस्तो ज्ञानी ऋषिः कपिलः । स च स्वस्यार्ष-ज्ञानेन योगसिद्धदिव्यचक्षुषा च प्रधानस्येदृशं महिमानं साक्षाच्चकार । यत् साक्षात्कृतं स्वेन तदेव स्मृतिरूपेणोपनिबद्धम् । अनुपलब्धिप्रमाणेन ईश्वराभावं च सिद्धान्तयामास । यथार्थदर्शित्वेसति यथार्थवक्ता आप्तः सः । तत्त्वसंख्यानेन तत्त्वोपदेश एव तत्तन्त्रस्यैदम्पर्यम् । इत्थं पूर्वाध्या-येन संगतिः । पूर्वपादे सांख्यतत्त्वप्रक्रियायाः श्रुतिपठितत्वोपपादनेन सांख्यस्य प्रत्यवस्थानं निरुद्धम् । प्रकृत्यधिकरणेसेश्वरसांख्यस्य प्रत्यवस्थानं निरुद्धम् । श्रुतेः स्वारस्यबलेन तत्तन्निरोधः कृतः । अन्तिम-सर्वव्याख्यानाधिकरणे विशेषेण पूर्वमेव विचारितानामविचारितानां च सर्वेषां वेदान्तानां अविशेषेण उक्तब्रह्मकारणत्वे, तदधीनप्रकृतौ च तात्पर्यं सांख्ययोगयोरशब्दत्वं चोक्तम् । कथं सर्वेषां वेदान्तानां न्यायबलेन यथेष्टं त्वया व्याख्यानं शक्यम्, सति सांख्यस्मृतिरूपवचने इति पूर्वाधिकरणोपरिचाक्षेपः । "परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधारयितुमशक्नुवन्तः प्रख्यातप्रणेतृकासुस्मृतिष्ववलम्बेरन्, तद्बलेन च श्रुत्यर्थं प्रतिपित्सेरन् । अस्मत्कृते व्याख्याने न विश्वस्युः बहुमानात् स्मृतीनां प्रणेतृषु । कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते । श्रुतिश्च भवति "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति-जायमानं च पश्येत् ।" इति तदवष्टंभनेनचैतेऽर्थं प्रतिष्ठापयन्ति । तस्मात् अपि स्मृतिबलात् वेदान्तवाक्यावाख्येया इति पुनराक्षेपः" इति भगवत्पादा-भाष्यमत्र भाव्यम् । पूर्वाधिकरणे सर्वेषां वेदान्तानां ब्रह्मकारणत्वपरतया-व्याख्यातत्वं स्पष्टमुक्तं सूत्राक्षरैरेव । सूत्रकारस्य व्याख्यानं न्यायबलेन-

कृतम् । सूत्रकारादपि प्राचीनः सांख्यप्रणेतापरमर्षिः कपिलः यस्तत्त्वदर्शी ऋषिरेवप्रसूतः, यथा वेदान्तिभिः वामेदेवादिविषये उच्यते । 'बिभेत्यल्पश्रुताद्वेदः' । वेदार्थविशदीकरणेतत्त्वसाक्षात्कारसम्पन्नाऽऽप्तपरमर्षिस्मरणप्रकारापेक्षास्त्येवत्रेदान्तार्थग्रहणाय । तत्त्वैकप्रतिपादिकायाः कापिलस्मृतेरत्यन्तनिरवकाशत्वमापद्येत तत्र तत्प्रमाण्यानभ्युपगमे । इत्थं आक्षेपोभाष्यद्वयेऽपि समानः । कपिलस्मृतिरूपवचनविरोधेन त्वदुक्तन्यायानां प्रसरावकाशः तत्त्वविषयवेदान्तव्याख्याने इत्याक्षेपः । 'अस्मत्कृते च व्याख्याने न विश्वस्युः' इति भगवत्पादभाष्ये अस्मच्छब्देन सूत्रकारोविवक्ष्यत इति स्पष्टम् । शान्तिनिधिः सूत्रकारः कपिलर्ष्यनुयायिभिः कपिलर्षिमाहात्म्यबलेन प्रत्यवस्थाने नात्मस्मृतिं प्रमाणत्वेनोपन्यस्येत्, यद्यपि सोऽपि स्मृतिप्रणेतापरमर्षिः । य द्ायुक्तिबलाबलंचवादोस्ति , तत्रस्वस्मृतिरुदाह्रियते एव । अत्र महाभारतवचनोपन्यासः शाकरभाष्यकृतः न सूत्रकृद्बुद्धिस्थोभवेत् । 'अन्यस्मृत्यनवकाशदोषप्रसंगात्' इति केवलमन्यपदेन स्मृत्यन्तरानवकाशत्वं प्रसञ्जयति सूत्रकृत् । स्मृतीनां परस्परविरोधस्योक्त्याकपिलस्मृतिवचनविरोधहेतुःस्मार्यते । तथा च तिष्ठत्येव पूर्वाध्यायनिरूपित बहुन्यायबलम् । तिष्ठति सम्यङ्निरूपितं वेदान्तानां गतिसामान्यं श्रुत्यर्थस्पष्टत्वं च । "स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृतिबलेनैवोत्तरं दास्यति" इति शांकरवाक्यभाष्यं सूत्रकारोक्तिवदुपन्यस्तम् । 'अयस्मृति' इति कपिलतन्त्राविरुद्धस्मृत्यन्तरानवकाशत्वप्रसङ्गमात्रं हेतूकृतम् । पूर्वपक्षिणायादृशशब्दोपनिबद्धो हेतुरुच्यते तच्छब्दैरेव सिद्धान्तहेतुरुपनिबध्यत इति रसोनुभाव्यः । ध्रुवमनुभूतः सो रसः भगवत्पादैः स्मृतिबलेनैवोत्तरस्य दीयमानत्वं चारु भाषमाणैः । 'यक्षानुरूपोबलिः' पिशाचानां पिशाचभाषया उत्तरं देयं इति सूत्रकारभङ्गीव । उत्तरसूत्रे च 'इतरेषां चानुपलब्धेः' इतरेषां तुल्यप्रख्यातस्मर्तृयोगीन्द्राणां कपिलोक्तप्रकारेण तत्त्वानुपलब्धिहेतूक्रियते कपिलोपलब्धे विश्वसनीयत्वप्रदर्शनाय । अनुपलब्धेरिति हेतुखण्डः योगीन्द्रस्य परमर्षेः कपिलस्य स्वोकरीत्यातत्त्वोपलब्धिः पूर्वपक्षिणोपन्यस्तेति, सूचयन् भूयसां न्यायमबलस्यतुल्यमहिमबहुसमर्तृपलब्ध्या कपिलोक्तमार्गस्याश्रद्धेयत्वं

सिद्धान्तयति । 'विप्रतिषिद्धसमवाये भूयसांस्याद्बलीयस्त्वं' इति न्यायः स्फोर्यते 'इतरेषां' इति बहुवचनेन । 'विप्रतिपत्तौचस्मृतीनां न चातीन्द्रियाम्नायार्थान् श्रुतिमन्तरेण कश्चिदुपलभते', सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां' इति भगवत्पादभाष्यं च, "स्मृतीनां भूयसीनां ब्रह्मोपादानत्वप्रतिपादनपराणां तत्र तत्र दर्शनात्" इति भामतीवाक्यं चेह भाव्यम् । "योगीन्द्रकपिलस्य एवमुपलब्धेः कथं स्मृत्यन्तरमादरणीयमितिचेत् वेदार्थसाक्षात्कारचतुरमन्वादियोगीन्द्राणां कपिलार्थानुपलब्धेः कपिलोपलब्धिर्भ्रम एव" इति वेदान्त सारो रस्यः । प्रथमसूत्ररीत्यनुसारेण, द्वितीयसूत्रे 'अनुपलब्धेः' इति सिद्धान्तहेतुविन्यासेन च अत्र द्वितीयसूत्रे योगीन्द्रस्य परमर्षेः कपिलस्य स्वोक्तप्रकारेणातीन्द्रियतत्त्वोपलब्धेः' इति पूर्वपक्षहेतुरीतिरुन्नेया । तिष्ठतु गीतागायकस्येश्वरत्वम् । स किं न योगीश्वरः कृष्णः इति प्रतिप्रश्नोपि व्यज्यत इव ।

पूर्वसूत्रे मनुस्मृतिग्रहणमिष्यतेऽन्यस्मृतिशब्देनेति स्पष्टं संमतं च । 'यद्वैकिं च न सोऽवदत् तद्भेषजमिति तद्विषये व्याप्तिगर्भं श्रुतिवचनम् । कस्यचित्कपिलनाम्नः अतीन्द्रियद्रष्टृत्वमात्रमुक्तं श्रुत्या । तस्य यथार्थवक्तृत्वं तत्र नोक्तम् । मनुविषयश्रुत्या तदुक्तस्य सर्वस्य भवरोगभेषजत्वरूपहितत्वमुक्तम् । कपिलस्मृतिप्रतिपक्षत्वेन मनुस्मृतिरुपात्ता अन्येति शब्देनेति उभयसम्मतम् । "सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।" इत्यादिमनुश्लोकाः ज्ञाप्यन्ते सूत्रकृता । तेन च कारणावस्थाविभक्तनामरूपचिदचित्छरीरकब्रह्मणो जगत्कारणत्वं वेदान्तसम्प्रतिपन्नमिति स्पष्टीक्रियते । प्रकृत्यधिकरणे तादृशविशिष्टब्रह्मणः उभयविधकारणत्वं सूचितम् । एतेन प्रकृत्यधिकरणेनापि कथंचित्संगतिर्लभ्यते । मनुना स्वस्मृत्युपक्रमे चिदचिच्छरीरविशिष्टस्य नारायणस्य विश्वस्रष्टृत्वं कण्ठत उक्तम् । कारणस्य नारायणत्वमत्राध्यायोपक्रम एव स्पष्टमुक्तं भगवत्पादैः "अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमिदं पुराणः । स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः' इति पुराणे" इति । "अन्तर्यामि

व्यतिरिक्तवस्तुनो दुर्वचत्वमतश्शब्दार्थः" इत्यानन्दगिरिभिः विश्व-शरीरिणो विश्वान्तर्यामिण एवोभयविधकारणत्वमिति पराशरहृदयमिति स्पष्टीकृतम् । शास्त्रस्य शारीरकसंज्ञा शारीरकब्राह्मणस्य मुख्योप-जीव्यत्वेनेत्यस्मदुक्तमनुगृह्यते मनुवचनेनाऽऽनन्दगिरिणा च । "प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरः जगत उत्पत्तिकारणं, उत्पन्नस्य जगतः नियन्तृत्वेन स्थितिकारणं, तस्य पुनः स्वात्मन्येवोपसंहारकारणं, स एव च सर्वेषां नः आत्मेत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम्" इति भगवत्पादभाषितः पूर्वाध्यायसारः विश्वशारीरके विश्वान्तर्यामिण्येव सर्व-वेदान्तवाक्यानां जन्मादिलक्षणसमन्वयः कृतः सूत्रकारेणेति स्पष्टयति । जगन्नियन्तृतया स्थितः शारीरब्राह्मणोक्तः । विश्वस्यैकत्वेन बन्धकसूत्र-भूतान्तर्यामिणि ब्रह्मसूत्रशास्त्रसमन्वयः । "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।" ब्रह्मैव 'विश्व' सूत्रत्वेन यत्रोपपाद्यते तत् ब्रह्मसूत्रम् । शब्दब्रह्मभूतवेदान्तवाक्यकुसुमानि मालात्वेन ग्रथयित्वा ब्रह्मालंकुर्वाणानि ब्रह्मसूत्राणि । अनन्तस्य ब्रह्मस्वरूपादेः सूत्रैर्निबन्धनाणि ब्रह्मसूत्राणि ॥

'इतरेषां चानुपलब्धेः' इति सूत्रस्य महदहंकारपञ्चतन्मात्राणां सांख्योक्ततत्त्वानां वेदान्तेषु स्मृतिषु चासद्वादोक्तिपरतया व्याख्यानं उपलब्धि-बाधितम् । बहुस्वोक्तिव्याहतं च । 'भूमिरापः' इति गीतासासमिक-श्लोकभाष्ये "पृथिव्यादयः तन्मात्राण्येवोच्यन्ते, मन इति अहङ्कारो गृह्यते । बुद्धिरिति महत्तत्त्वं" इति भगवत्पादभाषितमवधेयम् । "एतद्योनीनि भूतानि" इति श्लोकस्य "यस्मान्ममप्रकृतियोनिः कारणं सर्वभूतानां, अतोऽहं कृत्स्नस्य जगतः प्रभवः - उत्पत्तिः, प्रलयः - विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञः ईश्वरो जगतः कारणमित्यर्थः" इति भगवत्पादभाष्येणास्मत्सिद्धान्त एव गीताब्रह्मसूत्रभगवत्पादानां संमतं इति करतलामलकीक्रियते । "वेदान्तिभिरपिप्रधानकारणता-वादः स्वीकृत एव मायापरिणामस्वीकारात्' इति प्रदीपः । तेन च प्रधानस्य वा महदहङ्कारतन्मात्राणां वा अनुपलब्ध्युक्तिर्बाधितैव भवेत् ।

प्रथमसूत्रे न मूलप्रकृतिप्रस्तावः तन्मात्रप्रस्तावो वा इदन्तयाकृतः । ईश्वरानधीनस्वतन्त्राचेतनकारणत्ववर्णकसांख्यप्रक्रिया कपिलमहर्ष्युपलब्धिबलेनावलंबिताआक्षिप्ता । द्वितीयसूत्रे बहूनां कपिलानवर्षीणां तथा तस्यानुपलब्धेः एकस्योपलब्धिरप्रमाणीक्रियते । मूलप्रकृतिस्वरूपं उपादानकारणकोटिप्रविष्टत्वेनाभ्युपगम्यते सूत्रकृता । "तदधीनत्वादर्थवत्', 'तदभिध्यानादेव तु तल्लिङ्गात्सः' इत्यादिसूत्राणि, तेषां शाङ्करभाष्यवाक्यानिचेदं स्फुटयन्ति ॥

अत्र "परमात्मानमेव प्रकृत्यापस्तम्बः पठति "तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः" इति । एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वेनोपादानत्वेन च प्रकाश्यते" इति श्रीशाङ्करभाष्यमापस्तम्बेसूत्रपठितश्रुतिमुदाहरति । तत्रैव 'पूःप्राणिनः सर्वगुहाशयस्य' इति श्रुतिः पठिता । तेन सर्वे जीवात्मानः विश्वान्तर्यामिणःशरीररूपपुरं इति स्पष्टं बोध्यते ॥

अत्र "कपिलः आत्मभेदवादी, सूत्रकारस्त्वेकात्मवादी इति साख्यमतवैषम्यमुक्तं सौत्रब्रह्मवादस्य श्रीशाङ्करभाष्ये । 'महाभारतेपि च" बहवः पुरुषाः ब्रह्मन् उताहो एक एव तु' इति विचार्य 'बहवः पुरुषाराजन् सांख्ययोगविचारिणां' इति परपक्षमुपन्यस्य तद्व्युदासेन 'बहूनां पुरुषणां हि यथैकायोनिरुच्यते । तथा तं पुरुषं विश्वमाख्यास्यामिगुणाधिकम्" इत्युपक्रम्य "सर्वेषां साक्षिभूतोसौ न ग्राह्यः केन चित् क्वचित्" इति सर्वात्मतैव निर्धारिता ।' इति तत्र भाषितमसौत्रमप्रसक्तं, एकात्मवादस्य वा जीवब्रह्माभेदस्य वा असाधकं च । अत्र कारणत्वविषय एव विचारः । नात्मनानात्वैकत्वविषये । यदिसूत्रकारस्यैकात्मवादः अभिमतोऽभविष्यत्, सांख्यमतप्रतिक्षेपकरचनानुपपत्त्यधिकरणे तदुपन्यासोऽकरिष्यत । यद्यपि द्वितीयपादविचारितदर्शनेषु नैकमपि दर्शनमेकात्मवादि, सर्वशून्यवादिनमेकं विहाय सर्वेऽपि आत्मबहुत्ववादिन एव, स्वमतस्यापि तद्वादत्वात् नैकमपि तदंशे दूषयति इति विमर्शग्रन्थेषु प्रदर्शितमस्माभिः । 'बहवः

पुरुषाराजन्' इति वचने 'नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह। समासेन तु तद्व्यासः पुरुषैकात्म्यमुक्तवान्' इति अनन्तरपठितं न विस्मरणीयम् । सांख्याः योगिनश्च बहून् पुरुषान् आत्मनः (जीवान्) उपगच्छन्ति' आत्मनामपि प्राणभूतं विश्वनायकमेकं मुख्यं सर्वोत्तमं पुरुषं (ईश्वरं) नोपगच्छन्ति, येनैवान्तर्यामिभूतसर्वात्मना ते सर्वे सत्तां लभन्ते प्राणन्ति च । अनन्तानात्मनः अभ्युपगच्छन्तोपि, सर्वात्मनामन्तर्याम्यात्मभूतं विश्वप्राणनमेकं मुख्यं पुरुषं नोपगच्छन्तीति भीष्मस्य कुलवृद्धस्य शोकः । यः सर्वात्मनः कृत्स्नं विश्वं च सूत्रभूतेन स्वेन, बहुधाभ्यस्तविश्वचिदचिदन्तर्यामिणासमस्य बध्नाति तं मुख्यपुरुषं विस्मरन्तीति शोको व्यङ्ग्य एव । 'समासेन' इत्यस्य विश्वं कृत्स्नमपि सूत्रभूतेन स्वेनान्तर्यामिणा समस्य एकीकृत्येत्यर्थः । एकेन परेण पुरुषेण विश्वमेकात्मकमिति सर्वोपनिषत्सिद्धान्तः । "ऐतदात्म्यमिदं सर्वमिति श्रुतिमतमेवाभिहितं भगवद्व्यासमतत्वेन 'समासेन पुरुषैकात्म्यमुक्तवान्' इति । वेदानां विभागकर्ता व्यासः पृथक्त्वेन स्वनिष्ठत्वेन च स्वाधारत्वेन भासमानानां विश्वचिदचितां एकब्रह्मात्मकत्वेन ब्रह्मापृथक्त्वेन समासं प्रादर्शयदिति भीष्मवचनरसोऽनुभाव्यः । चेतनाचेतनात्मकं विश्वं ब्रह्मणि समन्वितं प्रदर्शयति सूत्रशास्त्रम् । समासेन विशिष्टाद्वैतदर्शनमनुविभावयिषितम् । 'यद्धि भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः । यद्धि प्रज्ञामात्रा न स्युः न भूतमात्रास्स्युः । न ह्यन्यतरतोरूपं किञ्चनसिध्येत् । नो एतन्नाना । तद्यथारथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः, स एव प्राण एव प्रज्ञात्मा" इति कौषीतकीरूपणमपि भाव्यम् । तद्वाक्यमुदाहृत्य "अयं ब्रह्मधर्मः । तस्मात् ब्रह्मण एवैतदुपाधिद्वयधर्मेण चैकमुपासनं त्रिविधं विवक्षितम" इति प्रतर्दनाधिकरणे शङ्करभगवत्पादभाषितमस्मन्मताभिन्नमिति सुस्फुटम् । विशिष्टैकब्रह्मदर्शने श्रीशङ्करभगवत्पादग्रन्थानां समन्वितत्वं वयं मन्यामहे । अस्मिन्नधिकरणेऽनन्तराधिकरणे च ईश्वरा-

नधीनप्रधानकारणतावादमात्रस्य सांख्ययोगस्मृत्यवष्टंभमूलकसाधनस्य निष्प्रमाणकतोच्यते ,। अनन्तराधिकरणे 'जगदुपादानस्वतन्त्रप्रधान-गोचरं प्रामाण्यं नास्ति हैरण्यगर्भपातञ्जलादियोगशास्त्रस्येत्युच्यते' इति भामती ।

प्रदीपे — 'ब्रह्म न जगदुपादानं, जगद्विलक्षणत्वात् इति न ब्रह्मण्येव वेदान्तानां समन्वयः इत्याक्षेपसंगतिः प्रथमाध्यायान्तिमधिकरणेन' इति नविलक्षणत्वाधिकरणसंगतिरुक्ता । शिष्टापरिग्रहाधिकरणारंभे-चोक्तं प्रदीपेन "एतावता प्रसंगेन ब्रह्मणः कारणत्वमेव, तस्य कारणत्वं निमित्तकारणत्वरूपं, उपादानकारणत्वं तु नास्त्येवेति सांख्ययोगदर्शनविरोधः परिहृतः । साम्प्रतं तु अन्येषां पाशुपत-पाञ्चरात्रवैशेषिकनैयायिकदर्शनानां विरोधोप्यकिञ्चित्कर इति निरूपणार्थं सूत्रम्" इति । एतेन ब्रह्मणः उपादानकारणत्वविषये एव प्रकृत्यधिकरणादारभ्य विचारो वर्तते इति स्फुटमभ्युपगम्यते । आत्म बहुत्वादिविचाराणां नात्र प्रसक्तिलेशः । जगन्मिथ्यात्ववादस्य विवर्त-वादस्य च न गन्धोप्यत्रास्ति । पाञ्चरात्रस्योपादानकारणत्वविषये वेदान्ताभिन्नत्वं भगवत्पादैरेवस्पष्टं भाषितं "येषां पुनः प्रकृति श्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतः, 'यद्यप्येवं जातीयकोंशः समानत्वान्न-विसंवादगोचरीभवति" इति । अत्र पाञ्चरात्रस्योपादानकारणत्वविषये प्रतिपक्षमतत्वेन प्रदीपपठनं, स्वभाष्यादिविरुद्धं प्रद्वेषैकमूलम् । "परमाणुविज्ञानशून्यस्वभावकारणाश्रिततर्कनिमित्ताक्षेपोऽतिदिश्यते" इति वार्तिकव्याख्यानेनापि प्रदीपस्याप्रामाण्यं स्फुटीभवति । प्रदीपकृतौ गीताग्रन्थे "; पाञ्चरात्रदर्शनाधिकारे स्वशरीरप्रकृतिचिदचिदुपादानत्व-मात्रेणैव ब्रह्मणोप्युपादानत्वव्यपदेशमात्रे" इति यदुक्तं वेदान्ताद्वैलक्षण्यं तस्यासत्त्वं पूर्वोदाहृतशांकरसूत्रगीताभाष्यादिवाक्यैरेव, निरूपितं भवति ॥

---

## ॥ विलक्षणत्वाधिकरणम् ॥

अत्र परिणामवादमवलंब्य सांख्यादि पूर्वपक्षः इति संप्रतिपन्नम् । परिणामवादपरिग्रहेणैव सिद्धान्तसूत्राणि निबद्धानीति स्फुटम् । 'परिणामा' दिति प्रकृत्यधिकरणसूत्रं सिद्धान्तहेतुप्रदर्शकमिति च सम्प्रतिपन्नम् । का प्रत्याशा सूत्रेषु विवर्तवादसंमत्यन्वेषणस्य । परिणामवादः सूत्रकारसम्मतवाद इति स्फुटीक्रियते शांकरभाष्येणापि । अयं विषयो विस्तृततः अस्माभिर्भूमिकाविमर्शे । अतोऽत्र विस्तारस्यानपेक्षैव । 'दृश्यते तु' इति सिद्धान्तसूत्रस्य भाष्ये पुरुषादिभ्यो विलक्षणानां केशनखादीनां उत्पत्तिर्दृष्टान्तीकृता । 'नन्वचेतनान्येव पुरुषादिशरीराणि अचेतनानां केशनखादीनां कारणानि' इति पूर्वपक्ष्युक्तमङ्गीकृतमेव भाष्यकारेण 'एवमपी" ति । "तत्राचेतनानां कार्यकारणभावमभ्युपेत्यैव वैलक्षण्यं साधयति" इत्यानन्दगिरेरवतारिकयेदं स्पष्टीकृतम् । यथा जीवशरीरांशद्वारा केशनखादीन्प्रति तस्योपादनत्वं, तथा ईश्वरस्यापि स्वशरीरद्वारा विश्वंप्रतीति सूत्रकारहृदयं विवृतं भगवत्पादैः । "महांश्चायं परिणामिनः स्वभावविप्रकर्षः" इति भाषणेनापि परिणामपक्ष एव सूत्रकृत्पक्ष इत्यार्जवेन व्याख्यातम् । "स्वामिभृत्ययोरपि अचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात्" इति वाक्ये द्वारभूतं शरीरमंशपदेन निर्दिष्टम् । शरीरविशिष्टस्य पुरुषस्य शरीरस्यांशत्वेन व्यवहारः सहज इति स्फुटीभवति । 'अंशस्तत्र विशेषणभूते शरीरे विशिष्टस्यांश इति व्यवहारस्य नैसर्गिकत्वं तेन व्यक्ती भवति । कार्यस्य कारणात्मना सत्त्वपक्षो यः सत्कार्यवादः सकार्यभूतजगन्मिथ्यात्वनिरासकः । कार्यस्यासत्त्वे आपादिते 'अस' दिति सूत्रेण इष्टापत्तिरिति खलु वक्तव्यं विश्वमिथ्यात्ववादिना । 'कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरप्यविशिष्टम् ।" इति भगवत्पादभाष्यम् । यथा प्रलये ब्रह्मात्मकत्वेन विश्वं सदेवासीत् तथेदानीमपीति तदर्थः । अस्मन्मतमेवेदम् । 'तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति' इति भाष्यनिगमनमप्यवधेयम् । यदि प्रलयेऽपि जगन्नमिथ्या,

ईदानीं तस्य मिथ्यात्वं को वा वदेत् । असतः प्रपञ्चस्य न ब्रह्मसा-लक्षण्यवैलक्षण्यविचारस्य संभवः । 'न तु दृष्टान्तभावात्' इति सिद्धान्तसूत्रस्य भाष्ये "शरावादयोमृत्प्रकृतिकाः रुचकादयश्च सुवर्ण-विकाराः', 'पृथिवीविकारश्चतुर्विधः भूतग्रामः" इति सत्यपरिणा-मदृष्टान्ता भाषिताः । विवर्तवादी किमेवं वदेत् । 'अस्तिचायमपरो दृष्टान्तो यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यतेऽवस्तुत्वात्" इति भाषितं नोपादानदृष्टान्तप्रदर्शकम् । तेन तस्याचादादृष्टान्तत्वमेव । 'मायाव्यनुपादानमित्यरुच्यादृष्टान्तान्तरं (स्वप्न-दृष्टान्तं) आह" इति रत्नप्रभया मायाविनोनुपादनत्वं स्पष्टमुक्तम् । स्वप्न-द्रष्टुः स्वप्नदृष्टान्प्रत्युपादानत्वं न कोऽपि प्रत्येति व्यवहरति वा । "माया-मात्रं ह्येतद्यत्परमात्मनः" इति भाषितमसमीचीनम् । असौत्रं सूत्रशास्त्र-विरुद्धं गीताशास्त्रविरुद्धं च । 'मायमात्रं,' इति स्वाप्नपदार्थमात्रे उक्तं सूत्रकृता । प्रपञ्चविषये 'नाभावः' इति नञ्द्वयेन भाव एव दृढं सिद्धान्तितः । "वैधर्म्याच्चन स्वप्नादिवत्" इति योगाचारावलम्बित-स्वप्नादिदृष्टान्तो निराकृतः । स्वप्नविषये यत्सूत्रितं मायामात्रत्वं तदेवात्र भगवत्पादैः प्रयुज्यते प्रपञ्चविषये । जाग्रद्विषये ईदृशमायामात्रत्व-भाषणस्य सूत्रशास्त्रविरुद्धता स्पष्टा ॥

(८२७)— "अयमेव विशेषः परिणामविवर्तोपादानयोः, यत् परिणाम्युपादानं सर्वात्मना कार्येनुवर्तते' विवर्तोपादानं तु जायमान-धर्मेणैव" इति साहस्री । अशुद्धिः प्रपञ्चस्य मायोपादानत्वप्रयुक्ता' इति च वदति । साहस्र्यभिमतनिर्धर्मकब्रह्मणः उभयविधकारणत्वमप्य-संभवि । ईदृशविचारा एव सूत्रकारस्य निर्विशेषब्रह्मण्यतात्पर्यं स्पष्टी-कुर्वन्ति । कार्यस्य मिथ्यात्वे' कारणस्य च धर्मशून्यत्वे, कथं सालक्षण्य-वैलक्षण्यविचारस्य प्रसक्तिः ॥

विश्वं त्रैगुण्यवत्त्वात्त्रिगुणत उदितं नासमादित्ययुक्तम्
सर्वाकारेण साम्यं क्वचिदपि न भवेत्केनचित्साम्यमिष्टम् ।
भग्ना हेतुव्यवस्थोचितसमगुणता गोमयाद्वृश्चिकादौ
स्थूलत्वं याति चेशः प्रकृतितनुरतस्सर्वचोद्योपमर्दः ॥

"इदं जगदचेतनं सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हति, न विलक्षणस्य ब्रह्मणः" इति शाङ्करभाष्योक्तमेव प्रथमपादेनोच्यते । "न ह्यसत्यतिशये प्रकृतिविकार 'इति भवति" इति शाङ्करसिद्धान्तभाष्योक्तमत्रोच्यते द्वितीयपादेन । यदुक्तं विलक्षणत्वान्नेदं जगत् ब्रह्मप्रकृतिकं इति, नायमेकान्तः, दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनां उत्पत्तिः" इति शांकरभाष्योक्तमत्रोक्तं तृतीयपादेन । "अचेतनानि पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि इत्यत्र सूत्रभाष्योक्तं, "एतद्योनीनि भूतानि" इति गीताश्लोकेन, उदाहृततच्छांकरभाष्येण चोक्तं शरीरद्वारकोपादानत्वमुक्तं अत्र तुरीयपादेन ॥

---

## ॥ शिष्टापरिग्रहाधिकरणम् ॥

(८६२) — 'एतेन योगः प्रत्युक्तः, 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः', इति च परमतनिराकरणं नात्रपादे संगच्छते" इति परिचोद्य "एते सूत्रे तदीयानुमानानां ब्रह्मकारणतावादविरोधिनामप्रसरमेव गमयतः इति तदुपयोगितयैव पादेतन्निरसनं, न तु तन्मतनिरासदृष्ट्येति नात्रापि परमतनिरसनमेव लक्ष्यं, किन्तु स्वमतविरोधपरिहरणमेवेति नात्रोक्तसूत्रासंगतिः" इत्युत्तरयति साहस्री । न्याय्यमिदमुत्तरम् । अनेनोत्तरेण स्मृत्यधिकरणे महाभारतवचनोपन्यासेन आत्मबहुत्ववादनिरोधभाषणं, योगाधिकरणे "द्वैतिनो हि ते सांख्याः नात्मैकत्वदर्शिनः" इति भाषणमप्रसक्तमसौत्रं स्वकपोलकल्पितमात्रमिति स्पष्टीभवति ॥

---

## ॥ भोक्रापत्त्यधिकरणम् ॥

एतत्पादीय सर्वाधिकरणान्यपि विस्तरेण विचारितान्यस्माभिः भूमिकाविमर्शे । नात्र सत्तात्रैविध्यं वा, तद्द्वैविध्यं वा, एकसत्तावादं वाऽणुमात्रमपि नपश्यामः सूत्रेषु अत्र वा कृत्स्नशास्त्रेऽपि वा । शारीरदृष्टान्तः

उपन्यस्तः नविलक्षणत्वाधिकरणे सूत्रकारेणेति भाष्यद्वयसंमतम् । ईश्वरस्य सशरीरत्वे तस्य भोक्तृत्वमापाद्यतेऽत्र । 'भोक्तापत्तेः' इत्यस्य कारणस्येश्वरस्य भोक्तृत्वापत्तेः इत्येव स्वरसोक्षरार्थः । अविभागः जीवेश्वरयोः भोक्तृत्वाभोक्तृत्वरूपस्वभावव्यवस्थारूपवैलक्षण्याभावः ॥

(८६७) — "भोक्तापत्ति शब्दस्य कथं 'भोक्ता भोग्यभावमापद्येता-भोग्यं वा भोक्तृभावमापद्येत' इति विवरणं" इति स्वभाष्योपरिसाहस्री चोद्यं दुष्परिहरम् । एतच्चोद्यस्य 'भोक्त्रापत्तिशब्देन जीवस्य ब्रह्मा-भेदोऽनूद्यते । तेन च 'तदभिन्नाभिन्नस्य तदभिन्नत्वं' इति न्यायस्य द्वार मुद्घाट्यते । अविभागपदेन च भोक्तुर्भोग्यभावो भोग्यस्य भोक्तृभावो वा व्यवस्थाप्यते इति विवेकः" इति साहस्रयुक्तमुत्तरं तद्वक्तुरज्ञाननैविड्यं प्रतिष्ठापयति । अविभागः पूर्वपक्षिप्रसंजितः सिद्धान्त्यनिष्टः । व्यवस्थाया अभावः अविभागशब्दार्थः । अविभागः स्यादिति पूर्वपक्षिणाऽनिष्ट-प्रसञ्जनम् । 'विभागः स्यात् (एव) इति सिद्धान्त्युत्तरम् । तत्र लोक-दृष्टान्तः प्रदर्श्यते लोकवत् इति । प्रसिद्धस्य भोक्तृभोग्यविभागस्य अभावप्रसंगः इत्यविभागपदस्य भगवत्पादभाष्यार्थः । उपपद्यते विभागः इति, 'स्यादिति' सिद्धन्त्युत्तरपदस्यार्थः । पूर्वपक्षिप्रयुक्ताविभागपदेन 'भोक्तुर्भोग्य भावो भोग्यस्य भोक्तृभावो वा व्यवस्थाप्यत" इति सिद्धान्त उच्यते इति कथनं विद्वदुपहास्यम् ॥

---

## ॥ तदनन्यत्वाधिकरणम् ॥

अत्र वक्तव्यं सर्वं विस्तरेणोक्तमस्माभिर्भूमिकाविमर्शे । "कारणात् (ब्रह्मणः) कार्यस्य (जगतः) व्यतिरेकेणाभावः" इति भगवत्पादभाषितः अनन्यत्वशब्दार्थः अस्मदुक्तसमान एव । ब्रह्मणोऽपृथक्सिद्धत्वमेव वयं वदामः कार्यस्य जगतः । ब्रह्मानन्यत् ब्रह्मापृथक् सिद्धं कार्यं जगत् इत्येव

जगद्ब्रह्मणोः सामानाधिकरण्यवाचिश्रुतीनामर्थः इति स्पष्टं निर्धारितं भवति । "नत्वयं विभागः परमार्थतोऽस्ति" इति भगवत्पादभाष्योक्तं सर्वैरप्यधिकरणसूत्रैः स्पष्टं खण्डयते । 'सत्त्वाच्च,' 'उपलब्धेः', 'भावेन' इति सौत्रपदानि कार्यासत्त्वपक्षनिरासकानि । तेषां कार्यमिथ्यात्वसाधनत्वं दुर्वचम । 'असद्व्यपदेशात् नेतिचेत्' इति कार्यस्य पूर्वमसत्त्वमाशंक्य तस्य पूर्वमपि सत्त्वमेव साध्यते । श्रौताऽसत्पदस्य अविभक्तनामरूपत्वरूपधर्मवत्तयाऽसदिवावस्थितमित्यर्थो व्युत्पाद्यते । तेन च "एकमेवाद्वितीयं इति श्रुत्यर्थः अस्मत्सिद्धान्तरीत्यैव, असद्व्यपदेशार्हविश्वविशिष्टैक ब्रह्मपरत्वेन आकारेण निष्कृष्यते । न हि मिथ्याभूतस्य कार्यस्य धर्मविशेषवत्वं सुवचम् । असत्त्वमाशंक्य निषिध्यते सूत्रकृता । मिथ्याभूतकार्यस्य नामरूपविभक्तत्वाविभक्तत्वरूपावस्थाद्वयोक्तिश्चासंभाविता । 'पटवच्च यथाच प्राणादिः' इति दृष्टान्तप्रदर्शनं च मिथ्यात्वाज्ञापरिपन्थि । कारणविषये श्रौतदृष्टान्तानुरोधमिच्छन्सूत्रकृत् न स्वपक्षविरुद्धपटप्राणादि सत्यपरिणामदृष्टान्तान् प्रदर्शयेत् । "केवलाद्वैतिनः अस्याधिकरणस्य कार्यमिथ्यात्वव्यवस्थापकत्वं मन्यन्ते" इति प्रदीपः । तच्च सर्वसूत्रविरुद्धम् ॥

(८७२) — भोक्तापत्तेरिति सत्तात्रैविध्यवादेन यत्र घटादीनामर्थक्रियाकारित्वलक्षणं सत्त्वमस्ति धर्मः, तदनन्यत्वाधिकरणं तु एकसत्तावादेन, यत्र पारमार्थिकसद्रूपब्रह्मतादात्म्यमेवाध्यस्यते नतु तद्व्यतिरिक्तं सत्त्वं घटादौस्वीक्रियते इत्यधिकरणद्वयस्यापि विषयविवेकः" इति परस्परविरुद्धवादद्वयाश्रयणेनाधिकरणयोर्विषयविवेककथनमुत्सूत्रं सूत्रविरुद्धमसंगतं च । परस्परविरुद्धवादद्वयाश्रयणमेकेन सूत्रकारेण क्रियते इति कथनमेवोपहास्यम । अर्वाचीनाद्वैतिनः परस्परं कलहायन्ते विरुद्धविविध वादाश्रयणेन । सूत्रकारकालात्पूर्वं कुत्र परस्परभिन्नवादौ । अत्यन्ताप्रसिद्धविरुद्धवादद्वयाश्रयणकथनमेवोपहास्यम् । 'लोकवत्' इति खल्वत्र सौत्रदृष्टान्त प्रदर्शनम् । कथं तस्य, अत्यन्ताप्रसिद्धस्य नूतनतया

कल्पयिष्यमाणस्य सत्तात्रैविध्यवादस्य प्रदर्शकत्वसंभवः । किं लोक-शब्दस्य तदर्थवाचित्वं वक्तुं शक्यम ?

(८७३) — 'वाचारंभणवाक्यस्य मृत्तिकासत्यत्वे तात्पर्यात् कथं परिणामिकारणमृत्तिकादृष्टान्तेन ब्रह्मानन्यत्वव्यवस्थापनं' इति परिचोद्य "वाचारंभणवाक्यस्य विकारानृतत्व एवतात्पर्यं, एकविज्ञानेन सर्वविज्ञाने विकारानृतत्वस्यैवोपयोगात्, कारणसत्यत्वस्य स्वतएवसिद्धस्याप्रतिपिपादयिषितत्वम' इत्युत्तरं दीयते । दृष्टान्तवाक्ये कारणमृत्तिकात्मकत्वं सर्वेषां मृत्तिकापरिणामानामिति दृष्टान्तसामञ्जस्य प्रदर्शने, का प्रसक्तिः पूर्वसिद्धत्वसाध्यत्वाद्युपन्यासस्येति वयं न पश्यामः"। दृष्टान्ते पूर्वसिद्धस्य प्रसिद्धस्य प्रदर्शनमेव शोभनम् । मृत्तिकात्मकत्वं सत्यमिति प्रसिद्धवदुपन्यासेन, दार्ष्टान्तिके सर्वस्य ब्रह्मात्मकत्वस्य ऐतदात्म्यशब्दव्यपदिष्टस्य सत्यत्वमेव श्रुत्यभिप्रेतमिति स्पष्टीभवति । अभ्यस्यति च श्रुतिः कण्ठरवेण 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्, इति तच्छब्दपरामृष्टस्य विश्वब्रह्मात्मकत्वस्य सत्यत्वम् । श्रुतिरेव सर्वस्य ऐतदात्म्यं सत्यं सत्यमिति वदति । अस्मत्सुहृत्तु 'असत्यं असत्यमिति श्रौतसत्यशब्दार्थमिच्छति । यदि 'विशेषविधेः शेषनिषेधाभ्यनुज्ञे" ति न्यायावलंबनमिष्येत, तर्हि मृत्तिकायाः सत्यत्वमेव दृढीक्रियते ॥

(७४) — 'स्वरूपतस्सत्त्वं परमार्थतोऽसत्त्वं च गृहीत्वा पूर्वाधिकरणम्, अत्र तु स्वरूपतोप्यभावं गृहीत्वेति तु विवेकः" इति साहस्री । पूर्वपक्षी यादृशसत्तावादी, तादृशसत्तावाद्येव सिद्धान्ती पूर्वाधिकरणे, अस्मिन्नधिकरणे च । सत्ताविषये कं वादमाश्रित्य पूर्वपक्षी भोक्तापत्तिं विभागाभावं च प्रसंजयति । जगत्सत्यत्ववाद्येव पूर्वपक्षीत्यत्र न कोपि संशयः । न जगत्परमार्थतो………………इति किं सूत्रकारोवक्ति लोकवदिति लोकप्रसिद्धदृष्टान्त प्रदर्शनेन । अत्यन्तालौकिकलोकविरुद्धमन्मात्राभिमतसत्तात्रैविध्यवादेनेति खलु वक्तव्यम् ।

(८७६)—'मृत्तिकैव सत्यं' इति 'ब्रह्मैव सत्यं' इत्यस्य दृष्टान्त इत्यर्थः' इति साहस्री । 'मृत्तिकेत्येव सत्यं इति' इति पद-घटितं वाक्यम । सर्वं मृण्मयं मृत्तिकात्मकमित्येव सत्यमिति श्रुत्यर्थः ।

---

## ॥ इतरव्यपदेशाधिकरणम् ॥

अत्र 'इतरव्यपदेशादिति हेतोः इतरस्य शारीरस्य ब्रह्मात्मत्व-व्यपदेशः, 'स आत्मा तत्त्वमसि' इति प्रतिबोधनात् इति यद्वा इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति 'तत्सृष्ट्वा तदेवानुप्राविशत्' अनेन जीवेनात्मना' इति च" इति द्वेधाऽर्थोऽभापि भगवत्पादैः । उभयथा च जीवब्रह्माभेदश्रुतिबलेन तदभेदवादे वेदान्तिनं स्थापयित्वा तत उपरि हिता-करणादिदोषप्रसक्तिः क्रियते पूर्वपक्षिणा । नाहं जीवब्रह्माभेदवादी, नाहमभेदश्रुतिबलेन उभयोरभेदं ब्रवीमि, किन्तु भेदश्रुतिबलेन जीवाधिकं तद्भिन्नमेव ब्रह्म वदामीति स्पष्टमत्र सूत्रकृत्प्रतिवचनम् । एतेन च भेदश्रुतेरेव प्राबल्यं, अभेदश्रुतिश्च श्रुत्युक्तब्रह्मात्मकत्वे तात्पर्यवतीति स्वमतं निस्सन्दिग्धं स्पष्टयति सूत्रकृत् । इदं च विस्तरेणोपपादित-मस्माभिर्भूमिकाविमर्शे ।

"पूर्वं प्रतिज्ञासिद्धये कार्यकारणयोरनन्यत्वं सत्त्वं च दर्शयता जीवब्रह्मणोरप्यैक्यं दर्शितम्" इति वार्तिकावतारिका एतदधिकरणस्य । अनन्यत्वोक्तया सद्विद्योदाहरणेन च तत्रापाततः श्रुताविपतरव्यपदेशबलेन ब्रह्मण एव जीवत्वं सूत्रकाराभ्युपगन्तव्यत्वेनापाद्य तामापत्तिं पुरस्कृत्य हिताकरणादिदोषप्रसक्तिः क्रियते पूर्वपक्षिणा । जीवब्रह्मभेदवाद्यहमिति भूयः कथितं स्पष्टं सूत्रकृता । अभेदश्रुतिः नैक्यं वदति, किन्त्वपृथक् सिद्धत्वमेव । भेदेऽप्यपृथक्सिद्धत्वं मदिष्टमनन्यत्वम् । "न तदस्ति विना यत्स्यात् मयाभूतं चराचरम्" इति भगवतैवेदमनन्यत्वं सुविशदं विवृतम् । सामानाधिकरण्यव्यपदेशेन ऐक्यं निर्बध्य दोषप्रसञ्जनं कृतम् ।

" अश्मादिवच्च तदनुपपत्तिः " इति सूत्रेण जडद्रव्यसमानाधिकरण-व्यपदेशेन यथा न जडैक्यं ब्रह्मणः, तथा जीवेनेतिस्पष्टमुच्यते। तृतीय-सूत्रस्य " अश्मकाष्ठलोष्ठादेरचेतनस्येव जीवस्य ब्रह्मभावानुपपत्तिः। नकेवलं भेदश्रुत्याऽर्थान्तरताऽवगम्यते, वस्त्वनुपपत्त्याचेत्यर्थः " इति दीपभापितार्थ एव स्वरसः। तच्छब्देन, समानाधिकरणव्यपदेश-बलेनापादितोऽभेदः परामृश्यते। श्रौतस्पष्टबहुभेदनिर्देशबलेन वस्तुविरोधेन च पूर्वपक्षिनिर्बद्धमभेदं निरस्य जीवादधिकत्वं साध्यते। एतेन "यत्र हि जीवातिरिक्तस्यब्रह्मण एव कारणत्वं, तन्मते कथमियमाशंकोदेति" इति प्रदीपोक्तं निरस्तं भवति। पूर्वप्रस्तुत सद्विद्यास्थसमानाधिकरण श्रुतिरूपेतरव्यपदेशबलेन तदभ्युपगमं निर्बध्य ऐक्यमापाद्यतदुपरिखलु दोषः प्रसज्यते। अन्यथाचेत् 'कारणस्यैव जीवत्वात्' इति खलु सूत्रयितव्यम् यदि सूत्रकारः जीवब्रह्मैक्यवादीति तेन पूर्वमेवोक्तं स्यात्। इतरव्यपदेशो-नाम श्रौताभेदव्यपदेशः समानाधिकरणश्रुतिदृष्टः। किमर्थं तद्धेतूक्रियते। तद्बलेन वेदान्तिनं ऐक्यवादे निर्बन्धुमेव। अन्यथा 'इतरैक्यात्' इति खलु सूत्रविन्यासोऽकरिष्यत। 'अधिकं तु' इति साध्यनिर्देशेन, पूर्व-पक्षव्यावर्तक तु शब्देन च, ऐक्यमापादितं पूर्वपक्षिणा, तद्बलेन च दोष-प्रसंजनं कृतमिति स्पष्टीक्रियते। जीवानधिकं जीवानतिरिक्तं जीवाभिन्नं ब्रह्म कारणं, अभेदव्यपदेशात्, अतोब्रह्मण एव जीवत्वस्य त्वयावश्यां गीकर्तव्यत्वात्, ब्रह्मणः स्वहिताकरण स्वाहितकरणादिदोषप्रसंगः इति खलु स्पष्टः प्रथमसूत्रार्थः। उत्तरभूतद्वितीयसूत्राक्षरैश्चेदं स्पष्टीक्रियते। हिताकरणादीत्यत्र स्वशब्दाध्याहारोऽर्थसिद्धः। "अतः कर्ता (ईश्वरः) हितमेवात्मनः कुर्यात् नाहितं' इति भगवत्पादभाष्येण आत्मन इति पद-स्याध्याहारः प्रदर्शितः। जीवब्रह्मैक्यस्य बलात्करणं विना संसारिणां हिताहितानां स्वष्टानां न कारणब्रह्मणः स्वत्वं वक्तुं शक्यं पूर्वपक्षिणा। इतरव्यपदेशः ऐक्यसाधकत्वेनोपन्यस्त इति सम्प्रतिपन्नम्। "इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रुतिः। तस्मात् यद्ब्रह्मणः

स्रष्टृत्वं तच्छारीरस्यैवे " ति भगवत्पादभाष्येण इतरव्यपदेशात्' इति हेतुपदस्य तद्बलेन सिषाधयिषितजीवब्रह्मैक्यपर्यन्तं तात्पर्यमिति स्वरसतया सुविशदमुपपादितम् । स्वभाष्यभाषितं स्पष्टं सूत्रार्थमबुध्वा प्रदीप इत्थं चोदयति । "श्रीभाष्यकारा अपि 'जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः " इति वदन्तः अद्वैतमतरीत्यैवाशंकेति विशदयन्ति " इत्युक्तिर्नक्षणमात्रक्षोदक्षमा। जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयः यद्यपि भूयोभूय उपन्यस्ताः पूर्वं सूत्रकारेण, यद्यपि च तद्बलेन जीवब्रह्म भेद एव पूर्वं सर्वत्र निर्धारितस्तथापि सद्विद्याप्रदर्शितसमानाधिकरणव्यपदेशबलेन जगद्ब्रह्मणोरनन्यत्वमुक्तं पूर्वाधिकरणे । अतोऽत्र अभेदवादमारोपयति पूर्वपक्षी अनन्यत्ववक्तुरुपरि । अनन्यत्वं पूर्वाधिकरणे वदतात्वया पूर्वं बहुशस्त्वया कृतो भेदवादः त्वयावलंबिताः भेदश्रुतयश्चपरित्यक्ता इत्येवापतति इति खलु स्पष्टः श्रीभाष्यार्थः । 'अनन्यत्वं वदतात्वये' ति स्पष्टं पूर्वपक्षिणा हेतुरुपन्यस्तः स्वबुद्ध्या फलतः भेदश्रुतिपरित्यागनिर्बन्धाय । 'भेदे सत्यनन्यत्वासिद्धेः' इति हेतुनिर्देशकेतद्भाष्यवाक्यशेषस्यापह्नवः कृतः अनृजुतया प्रदीपकारेण । तेन च 'पूर्वाधिकरणोक्तानन्यत्वशब्दबलेन तस्यैक्यार्थकत्वं निर्बध्यानिच्छन्तमपि सूत्रकारं बलात्कारेण ऐक्यवादं जिग्राहयिषति पूर्वपक्षी । सूत्रकारोपरि तद्वादं पुरस्कृत्यैव प्रसंजनं करोति । ऐक्यपक्षस्य स्वपक्षत्वेन पूर्वपक्षिकल्पनक्षण एव नाहमैक्यवादी, अधिकत्ववाद्येवाहं, न मया भेदश्रुतयः कदापित्यक्ष्येरन् भेदश्रुतिमेवाहं प्रबलांमन्ये इति स्पष्टं वदति सूत्रकारः। इदं सर्वं विस्तरेण निरूपितमस्माभिर्भूमिकाविमर्शे । श्रीभाष्यकारोक्तमेवोक्तं वार्तिककारैः, 'पूर्वं प्रतिज्ञासिद्धये कार्यकारणयोरनन्यत्वं सत्त्वं च दर्शयता जीवब्रह्मणोरप्यैक्यं दर्शितम् " इति । अनन्यत्वं वदता इति श्रीभाष्योक्तमेवोक्तं तत्र 'अनन्यत्वं दर्शयता' इति । तद्धेतुबलेन ऐक्याभ्युपगमनिर्बन्धश्चिकीर्ष्यते पूर्वपक्षिणेति स्पष्टम् । अत्र न्यूनाधिकभाव एव समर्थ्यते इति स्पष्टं वार्तिकात् । "एतच्च सर्वं न्यूनाधिकभावः भेदनिर्देशश्च संसारदशायां,

परमार्थदशायां तु नैच तयोर्भेदोऽस्ति नवा न्यूनाधिकभावः" इति वार्तिके, संसारदशायां भेदः मुक्त्यनन्तरं न भेदः इत्युक्तं वैषम्यन्तु असौत्रमद्वैतमतविरुद्धमिति स्पष्टम् । औडुलोमिमतमेतत् । "उत्क्रमिष्यत एवं भावात्' इति सूत्रेण तस्य सूत्रकारानिष्टत्वं स्पष्टीकृतम् । तच्च मतं सूत्रकारानभिमतमिति सर्वसम्प्रतिपन्नम् ॥

(८४६) — शारीरस्य ब्रह्मात्मत्वं तदात्मनाऽवस्थानादिति काशकृत्स्नमतानुसारेणैवेतरव्यपदेशमापाद्य हिताकरणाद्यापादनम्' इति वक्ति साहस्री । एतत्पूर्वाधिकरणोक्तानन्यत्वमवलंब्य पूर्वपक्षोत्थितिरिति मतद्वयसंप्रतिपन्नमिति पूर्वमेव प्रदर्शितं भाष्यवार्तिकोदाहरणेन । काशकृत्स्नमतं परित्यज्यौडुलोमिमतं सिद्धान्तयति सूत्रकार इति वार्तिकस्य पर्यवसानम् । काशकृत्स्नमतं किमिति पूर्वमेव प्रदर्शितमस्माभिः । तन्मतावलंबने पूर्वपक्षस्यानुत्थितिरेव । "तत्त्वमसीत्यादि बाधायामेव सामाधिकरण्यं गोचरयति" इति साहस्री वक्ति । जीवस्य बाधनं सामानाधिकरण्यनिर्देशेन क्रियत इति कथनं केवलं स्वतन्त्रः सूत्रविरुद्धो स्वमतविरुद्धोवादः ।

(८४८) — 'तदनन्यत्वाधिकरणे ब्रह्मव्यतिरेकेणाभावादभेदमात्रं प्रतिपाद्यते, अत्र तु ब्रह्मचेतनयोर्भेदाभेदप्रतिपादनमिति विषयविवेकात् 'अधिकन्तु भेदनिर्देशात्' इति भेदमादाय व्यवस्थानादुपपत्तिः" इति साहस्रीनिर्णयो न क्षोदक्षमः । अनेन सूत्रेण जीवब्रह्मणोर्भेदः अधिकशब्देन सिद्धान्त्यते इति स्पष्टमभ्युपगम्यते । पूर्वाधिकरणेन अभेद उक्तः, अत्र भेद उच्यते, अतो भेदाऽभेदसमुच्चयवादी सूत्रकार इति साहस्री । भेदाभेदसमुच्चयकथनमुक्तिमात्रव्याहतम् । समुच्चय इष्टश्चेत् 'अधिकं च' इति सूत्रविन्यासः कार्यः । परन्तु पूर्वपक्षिनिर्बद्धोऽभेदपक्षः स्वानिष्टत्वेन निषिध्यते तु शब्देन ।

(८४९) — 'औपाधिकस्य त्वंपदवाच्यस्य जीवस्य ब्रह्मणा साकं संसारदशायां न कस्यापि तादात्म्यानुभवः । 'नाहं ब्रह्म' इत्येव

सर्वेषामनुभवात् इत्यभिप्रेत्यात्यन्तभेदोऽत्र विवक्ष्यते ' इति गत्यन्तराभावेन आर्जवेन जीवब्रह्मणोरत्यन्तभेदमेव सूत्रकृत्सिद्धान्तितत्वेन वदति सार्द्धस्त्रीकृदपीति वयमत्यन्तं परितुष्यामः । जीवब्रह्मणोरत्यन्तभेदस्तत्त्वम् । श्रुतिमतं सूत्रकारमतं तदेव । अत्यन्ततादात्म्यमनुपलब्धिपराहतमिति निष्कर्षो न्याय्य एव । पूर्वाधिकरणे प्रपञ्चस्याविद्याकल्पितत्वं यदि साधितं, अत्र हिताकरणादिप्रसञ्जनस्यानवकाश एव । तत्प्रसञ्जनेकृते सृष्टेः कल्पितत्वोक्त्या समाधानं क्रियेत । 'लोकवत्तुलीलाकैवल्यम्' इत्यत्र, "न चेयं परमार्थविषया सृष्टिश्रुतिः अविद्याकल्पितनामरूपव्यवहारगोचरत्वात्" इति समाधिर्भाष्यते । तथा खल्वत्र समाधातव्यं, यदि प्रपञ्चमिथ्यात्वं तन्मतं भवेत् ।

'तदनुपपत्ति' रिति तृतीयसूत्रे तच्छब्दपरामृष्टं किं? । "तदनुपपत्तिः" – 'परपरिकल्पितदोषानुपपत्तिः ' इति शांकरभाष्यम् । तद्रीत्या तत्पदेन परपरिकल्पितदोषः परामृश्यते । हिताकरणाहितकरणप्रसक्तिः परकल्पितदोषः । 'अश्मादिवच्च' इति दृष्टान्तेन कथं तद्दोषवारणं शक्यम् । अश्मादीनामचेतनानां न हिताकरणादिसंभवः । इदमेकमेवालमस्मद्भाष्यार्थस्यैव साधुत्वनिर्णयाय । इतरव्यपदेशहेतुबलेनानन्यत्वोक्तिबलेन च बलात्कृतस्य जीवब्रह्माभेदस्य श्रुत्यर्थत्ववारणं क्रियते, अचेतनैरपि ब्रह्मणः सामानाधिकरण्यव्यपदेशप्रदर्शनेन, तेषां च ब्रह्मणोऽभेदस्यासंभावितत्वप्रदर्शनेन च ।

उक्तेनन्यत्वपक्षे चिदपि परिणतिर्ब्रह्मणस्स्यात्ततस्त-
ज्जीवैक्यं तत्त्वमस्याद्यवगतमहतं दुःखसिन्धुश्च जीवः ।
अभ्रान्तस्तु स्वदुःखं न सृजति न च तत्क्रीडयाप्यस्य मैवं
तात्स्थ्योनानन्यतोक्तेस्तदपि चिदचितोस्तच्छरीरत्वसिद्धेः ॥

"असदिति चेदित्यत्र प्रस्तुतमनन्यत्वं तस्य अधिकरणान्तरत्वात् तत्र न साधितम्, आरंभणाधिकरणस्य तत्प्रायोज्यत्वात् प्रतिपादनभेदाच्च । एवमनन्यत्वे समर्थितेऽनभिमतमापतितमित्याह इतरेति' इति श्रीविष्णु-

चित्तार्यैर्व्यक्तमुक्ता संगतिः" इति चिन्तामणिः । पूर्वाधिकरणे अनन्यत्वोक्त्या, 'तत्त्वमसि', 'सर्वं खल्विदं ब्रह्म' 'ब्रह्म दाशाः ब्रह्म दासाः' इत्याद्यभेदव्यपदेशबलेन च जीवब्रह्माभेदाभ्युपगमं निर्बन्ध्यहिताकरणादिदोषः आपाद्यते इत्यत्र निरूपितम् । 'ततस्थ्येनानन्यतोक्तेः' इत्यनन्यत्वस्य स्वाभिमतार्थ उच्यते । 'अन्यश्च राजन् स परः स चान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः" इति साधूनां मतमिति स्मार्यते 'तात्स्थ्येनानन्यतोक्तेः" इति । तत्तदात्मतयान्तरवस्थाय नियमनेन चिदचित्कृत्स्नविश्वशरीरकत्वं ब्रह्मणः । तत्स्थत्वं समानाधिकरणव्यपदेशश्च चिदचितोस्साधारणम् । शारीरकब्राह्मणं, पूर्वपक्ष्युदाहृताः 'सर्वं खल्विदं ब्रह्म' इत्याद्याः श्रुतयश्च तत्र प्रमाणम् । चिदचितां समानाधिकरणव्यपदेशस्य शरीरशारीरभावेन सामानाधिकरण्यं इत्येकैव श्रुतिस्मृतिसंमतागतिः इत्यश्मादिदृष्टान्तप्रदर्शनेन स्पष्टीक्रियते । "एतदेवात्मा एतदात्मा देवता अस्य सर्वस्य ऐतदात्म्यमिति विग्रहो द्रष्टव्यः । 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवता, अनेन जीवेनात्मनाऽनुप्रविश्य' इति श्रुतेः । तथा च 'आग्नेय' इतिवत् निरपेक्षतद्धितश्रुतेरित्यात्मान्तरं प्रपञ्चस्य वारितं भवति" इति वार्तिकोक्तमवधेयम् ॥

---

## ॥ उपसंहारदर्शनाधिकरणम् ॥

"इह हि लोके कुलालादयः घटपटादीनां कर्तारोमृत्पिण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः तत्तत्कार्यं कुर्वाणादृश्यन्ते ।" इति शांकरभाष्यप्रथमवाक्यमत्र । सत्यपरिणामवादमाश्रित्यैव पूर्वपक्षावतारो वर्ण्यते । विवर्तवादोपरिनास्याधिकरणस्योत्थितिगन्धोऽपि । न रजतकल्पनायाः कारकोपसंहारापेक्षाऽस्ति । "यथा लोके क्षीरं दधिभावेन परिणमतेऽनपेक्ष्य बाह्यसाधनम्" इति क्षीरदृष्टान्तप्रदर्शनमपि विवर्तवादस्य सूत्रबाह्यत्वं प्रतिष्ठापयति । 'देवादिवदपि लोके' इति

चेतनदृष्टान्तप्रदर्शनं क्रियते । देवाः पितरः ऋषयः तन्तुवायः बलाकाः पद्मिनी इति चेतनदृष्टान्ताः भगवत्पादभाषिताः । "शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादने उपादानं न तु चेतन आत्मा" इति यद्भाषितं, तत्समानमेव दार्ष्टान्तिके कारणे विशिष्टब्रह्मणि । अस्मन्मतानुकूलाः सर्वेदृष्टान्ताः । "मायाशबलितं ब्रह्म जगत्कारणमिष्यते । न शुद्धमक्षयं तद्धि निर्गुणं स्यान्निरंजनम् । मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । साऽश्लीलाभवतिज्ञेया मूलप्रकृतिसंहिता" इति सूक्ष्ममूलप्रकृतिविशिष्टस्यैव कारणत्वमुक्तम् । मायाशब्दस्य श्रुत्युक्तं मूलप्रकृत्यर्थत्वं चोक्तम् ।

(९०२) — "ब्रह्मणोमायापेक्षस्यापि जीवादृष्टादीनां भगवत्प्रसादरूपत्वस्यैवाद्वैतमते स्वीकारात् यदपेक्षत्वेपि स्वासमवेतत्वाभावेन वाह्यत्वाभावेन न वाह्यसाधनान्तरानपेक्षत्वं विरुद्धम् । चेतनादृष्टादीनां भगवत्प्रसादादिरूपत्वमेव वयं वदामः । विशिष्टस्यैव कारणत्वं न निर्गुणस्येति अत्र स्पष्टं वदति साहस्रीति सन्तुष्यामः । ब्रह्मणः स्ववाह्यस्वासमवेतसाधनानपेक्षया तस्य एकत्वाद्वितीयत्वव्यवहार इत्येतत्समानमेव मतद्वयेऽपि । चिदचिद्रूपप्रकृतिद्वयविशिष्टं ब्रह्म जगत्कारणमिति स्पष्टं भगवद्वानम् । "मायोपाधिस्वशक्तिव्यतिकरितपरब्रह्ममूलः प्रपञ्चः येषां तेऽपि अद्वितीयश्रुतिपतवितथयन्त्यत्र तत्तद्विशिष्टे" इति सारावलीगीतं सत्याप्यतेऽत्र वार्तिकेन, साहस्रया च ।

"शक्तौ कर्तृप्रकृत्योरुपकरणगणोपस्थितौ कर्मकृत्वं
तस्मादग्रे सदेकं किमुपकरणयेदित्यसच्छक्तिभेदात् ।
क्षीरायस्कान्तलूतात्रिदशमुनिमुखान्वीक्ष्यतोष्टव्यमस्मिन्
संकल्पादेव जीवोनुदतिनिजवपुर्विश्वरूपस्तथेशः ॥"

इति सारावली श्लोकोऽत्र भाव्यः । मुनयो विश्वामित्रादयः ।

## ॥ कृत्स्नप्रसक्त्याधिकरणम् ॥

अत्र वक्तव्यं कृत्स्नं सविस्तरमुक्तमस्माभिर्भूमिकाविमर्शे, रक्षामणि विमर्शप्रथमभागे च । अत्र परिणामपक्षोपर्येव पूर्वपक्ष इति स्फुटम् । प्रपञ्चस्य भ्रान्तिकल्पितत्वरूपमिथ्यात्वे कृत्स्नपरिणामप्रसञ्जनस्य को अवकाशः । परिणामपक्षोपर्येव पूर्वपक्ष इति स्पष्टं भगवत्पादभाष्यात् । विवर्तशब्दस्थाने तद्विरुद्धं परिणामशब्दं पठति भाष्यकारः विवर्तार्थकत्वेनेति कथनमुपहास्यम् । 'क्षीरावत्परिणममानम्' इति भाष्यपठितपरिणामशब्दस्य को वा विवर्तपरतां ब्रूयात् । "एकदेशपरिणामासंभवात्" इति भाष्यपदस्य "एकदेशविवर्तासंभवात्' इति कथमर्थो ग्रहीतुं शक्यः । "प्रकृतिविकारयोर्भेदेन व्यपदेशात्" इति सिद्धान्तभाष्येऽपि परिणामतात्पर्यमेव । परिणामशब्दः परिणमनक्रिया चात्र स्फुटं बहुकृत्वः पठ्येते । विवर्तशब्दं नैव पश्यामः । "इदं च भाष्यं परिणामपदस्य सूत्रेषु भाष्ये च विवर्तमात्रे विवर्तसाधारणे प्रवृत्तिरिति विशदयति" प्रदीपोक्त्या सूत्रकारभाष्यकारयोर्भाषानभिज्ञता, वादसरण्यनभिज्ञता चारोप्येते । स्वानभिमतस्वाभीष्टविरुद्धशब्देन कथं सूत्रकारो वा भाष्यकारो वा स्ववादस्य नामकरणं कुर्यात् । ध्रुवं तन्निग्रहस्थानं भवेत् । कामं कल्प्यतां स्वभाष्यकारेऽज्ञानं, सूत्रकारेतत्कल्पनं नैव वयं मृष्यामः ।

"ननु 'तदनन्यत्वमारंभण शब्दादिभ्यः" इत्यनेन शुक्तिरजतवत् सर्वस्य कार्यजातस्यमिथ्यात्वमवधारितम्, तत्कुतः परिणमवादमाश्रित्य पुनरियमाशंकेति-तत्राह-चेतनमेकमिति । 'क्षीरवद्धि' इति ब्रह्मणो दृष्टान्तमुपश्रुत्य तद्वदेव ब्रह्मणः पुनः परिणामित्वमंगीकृतमिति भ्रान्तस्य प्रतीत्येयमाशंकोत्पद्यते । भ्रान्तिनिवृत्तिरेवास्याधिकरणस्य प्रयोजनम्" इत्यस्याधिकरणस्योत्थितिर्निरूपितावार्तिके । 'भ्रान्तिनिराकरणेन समाधत्ते' इति सिद्धान्तसूत्रमवतारितम् । परिणामपदस्य विवर्तवादावाचकतामेव वार्तिककारोमनुते । परिणामवादः सूत्रानभिमत इति स्पष्टं कथ्यते

वार्तिकेन । अनभिमतं विरुद्धं कंचिद्वादं कथं स्ववादत्वेन सूत्रयेत्सर्वज्ञस्सूत्रकारः प्रकृत्यधिकरणे उपादानत्वबोधके । "कृत्स्नप्रसक्तिः-कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः प्राप्नोति" इति शांकरभाष्येकृत्स्नपरिणामप्रसञ्जनमेव कृतम् । तत्र परिणामशब्दस्य कोऽर्थः सूत्रकारगृहीतः, भाष्यकारगृहीतश्चेत्यात्मानं पृच्छत्वसमंतसुहृत । 'क्षीरवद्धि' इति किमर्थं परिणामदृष्टान्तः प्रादर्शिसूत्रकृता, स्ववादस्य परिणामवादत्वाभावे विवर्तवादत्वे च । 'प्रक्षालनाद्धिपंकस्य दूरादस्पर्शनंवरं' इति न्यायः किं विस्मृतः सूत्रकारेण, भाष्यकारेण च । परिणामवादारोपणस्य भ्रान्तिकृतत्वात्, मद्वादस्य विवर्तत्वात् इति खलु समाधातव्यम । चोद्यस्यासमाधेयतां खलु वक्तिसूत्रकारो द्वितीयसूत्रे । 'स्वपक्षदोषाच्च' इति सूत्रमपि उभयोर्वादिनोः परिणामवादित्वमेव स्वरसतया गमयति । "कृत्वा चिन्तयैवायं दोषसमानत्वाक्षेपः" इति तत्सूत्रविषये प्रदीपोक्तिर्नस्वरसा । "अत्र प्रकरणे सर्वाणि परिणामपदानि विवर्तपर्यवसायीनिमन्तव्यानि" इति प्रदीपोक्तिः सूत्रकार भाष्यकारयोर्भाषानभिज्ञतां वादाकौशलं च कलयति । ब्रह्मण एवाज्ञानं कल्पयतामेवेदृशं साहसं शोभनं भवेत् । क्षीरादिदृष्टान्तेन परिणामवादस्य शङ्कितत्वात् तन्निराकरणेन विवर्तवादं दृढीकर्तुमयमारंभः" इति वदन् चित्सुखः परिणामविवर्तयोः परस्परभिन्नवादत्वं, परिणामवादस्य सूत्रकृदनभिमतत्वं च स्पष्टं वक्ति । "प्रथमं परिणामवादावलम्बनेन सूत्रं योजयति" इति सिद्धान्तभाष्यारंभवाक्यानां परिणामपक्षेणैव समाधायकत्वं स्पष्टमुक्तम् । भाष्यस्थसर्वपरिणामपदानां प्रदीपोक्तस्य विवर्तार्थकत्वस्य चित्सुखोऽपि परिपन्थी । 'सर्वापेक्षा च तद्दर्शनात्' इति सर्वशक्तियोगं हेतूकरोति सूत्रकृत 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिमुदाहृत्य । का प्रसक्तिरत्र निर्गुणवादस्य । 'सर्वोपेता च तद्दर्शनात्' इति सूत्रस्याद्वैतमत एव सामञ्जस्यमिति विचित्रा साहस्युक्तिः । "कार्यात्मना स्वात्मनौपाधिकरूपेणानौपाधिकरूपेण वा सर्वधर्मोपपत्तेः" इति तदुक्तोहेतुः, शक्तिज्ञानबलक्रियादीनां स्वाभाविकत्वश्राविकया स्पष्टया श्रुत्याबाधितः ॥

---

## ॥ प्रयोजनवत्त्वाधिकरणम् ॥

प्रपञ्चस्य भ्रान्तिकल्पितत्वे प्रयोजनविचारस्यैवानवकाशः । 'न चेयं परमार्थविषया सृष्टिः' इति भगवत्पादभाषणमसौत्रं सूत्रविरुद्धञ्च । मिथ्याकल्पितविषये कथं वैषम्यनैर्घृण्यप्रसञ्जनं जीवकर्मानादित्वेन समाधानं च सांगत्यलेशं भजेताम् । 'लीलाकैवल्यं' इत्युच्यते, न माया-कैवल्यमिति वा, मिथ्याकैवल्यमिति वा । जगतः कल्पितत्वे, कर्मणा-मनादित्वं, प्रलयेऽपिनेषां ईश्वरप्रीतिकोपरूपत्वेन सत्त्वं च किमुच्येयाताम् । " प्रपञ्चस्य भ्रान्तिकल्पितत्वे भ्रान्तकृत्यस्य निष्प्रयोजनत्वं न दोषः " इति हि वक्तव्यम् । 'बहुस्यां' इति संकल्प्य खलु सृष्टिः । न हि कश्चित् भ्रान्तःस्यामिति संकल्प्य भ्राम्यति ।" इत्याद्याः श्रुतप्रकाशिकोक्ताः दुष्परिहरा दोषाः भाव्याः । " सर्वधर्मोपपत्तेश्च ' इति सूत्रस्य विधर्मि-कत्ववादबाधकत्वं स्पष्टमित्यत्र कस्य वा स्यात्सन्देहः । हेतुर्विरुद्ध एव भवेत् तद्वादस्य सूत्रकृन्मतत्वे । ब्रह्मणो निर्विशेषत्वात् तस्मिन् सर्वधर्मो-पत्तिरिति को वा वदेत् ॥

" सांख्यस्मृत्या विरोधात् विधिमतविहतेः कार्यवैरूप्यतोऽस्मि
न्नेकार्थानेकतन्त्रोदितविहततया देहभोगावियुक्त्या ।
कार्योपादान भेदात् स्वहितविहतितः कारकस्तोमहानेः
कृत्स्नांशाद्यूहबाधात् कृतिविफलतयाप्युत्थितं प्रत्यविध्यत् ॥ "

इति सारावली । " वेदान्तवाक्य स्वारस्य मद्वैतमत एवेति सर्वसम्प्रति-पन्नम् " इति प्रदीपोक्तिर्मिथ्यैकान्ता ॥

॥ इति द्वितीय प्रथमपादः ॥

---

## ॥ द्वितीय पादः ॥

## ॥ रचनानुपपत्त्यधिकरणम् ॥

निर्गुणस्य निर्विशेषस्य ब्रह्मणः निमित्तकारणत्वं वोपादानकारणत्वं वा न संभवेदिति स्पष्टं सम्प्रतिपन्नं च । यदि सूत्रकारो निर्गुणनिर्विशेष-

ब्रह्मवादी स्यात्, यदि च जिज्ञास्यत्वेन प्रतिज्ञातं ब्रह्म निर्गुणं, यदि च समन्वयसूत्रप्रतिज्ञातः सर्ववेदान्तानां ब्रह्मणि समन्वयः निर्गुणब्रह्मसमन्वयः, तदा, न शक्यं तेन सांख्योपरि जगद्रचनानुपपत्तिदूषणं प्रयोक्तुम्। निर्गुणस्यापि तदनुपपत्तेः स्फुटत्वात्। "ज्ञशक्ति वियोगात्" इति सांख्यं प्रति नैव वक्तुं पार्येत। इदं निरूपितं श्रीभाष्ये टीकायां च। सर्वशून्यवादिनमेकं विहाय सर्वे प्रतिवादिनः जीवबहुत्ववादिनः। तद्विषये-नैकमपि दूषणं प्रयुज्यते। जीवबहुत्वं संमतमेव सूत्रकारस्य। "नित्योनित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्" इत्यादि श्रुतीर्बहुमनुते सूत्रकारः। बहुवादिसंमतं सर्वलोक प्रतिपन्नं जीवात्मबहुत्वं यदि सूत्रकारस्या संमतमभविष्यत् ध्रुवं तद्विषये स्वसूत्रैः विचारः प्रावर्तिष्यत। कस्मिन्नधिकरणे इदं विचारितमिति अस्मत्सुहृदं पृच्छामः। स्मृत्यधिकरणे केवलं भाष्यकारेणेदं प्रतिज्ञामात्रत्वेनोच्यते। सूत्रबाह्यमेवतत्। भाष्यकारः स्वतन्त्रमुत्सुत्रमिदं वक्ति, न सूत्रकारो वक्ति। "कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां दृष्टः" इति शांकरभाष्यवाक्यं निर्गुणस्य कारणत्वमुत्सारयति। "प्रवृत्तिस्तु चेतनाद्भवतीति भ्रमः इति भाष्यमपि निर्विशेषचैतन्यकारणत्वभंजकम्। "प्रवृत्तिरहितोपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्चसन् प्रवर्तयेदित्युपपन्नम्" इति शांकरभाष्यं च सगुणेश्वरस्यैव साधकम्॥

(९२४) — "तत्तज्जीवादृष्टं हि न प्रधानसमवायि, किन्तु परमात्मप्रसादस्य जीवादृष्टत्वात् चेतनकारणसमवायि। ततश्चादृष्टापेक्षं कर्तृत्वं चेतनस्यैव, नाचेतनस्य कारणस्य भवितुमर्हति" इति साहस्रीसिद्धान्तः अस्मत्सिद्धान्तेनैकरूप एव। इयं च साहस्रयुक्तिः सगुणेश्वरकारणत्वसाधिका, निर्गुणनिरासिका च॥

(९३१)— ' प्रधानप्रवृत्तेरिव ब्रह्मणः प्रवृत्तेरपि न प्रयोजनं संभवति। जीवब्रह्मणोरभेदेन जीवस्य तन्मतेप्यनाधेयातिशयस्वरूपत्वात्, न भोगार्था सृष्टिः" इति परिचोद्य ' ब्रह्मणः प्रवृत्तिः स्वदृष्ट्या लीलामात्र-

मपि स्वाभिन्नजीवदृष्ट्या सप्रयोजनैव । अभिन्नत्वेऽपि जीवस्य, जीवत्वेन "अधिकं तु भेदनिर्देशा"दिति न्यायेन भेदोऽपि वर्तत इति नाऽनाधेयातिशयत्वं संभवति" इत्युत्तरं दीयते साहस्त्र्या । "अधिकन्तु भेदनिर्देशात्" इति सूत्रेण जीवब्रह्मभेदस्साधितः सिद्धान्तितश्चेति स्पष्टमभ्युपगम्य 'भेदोपी' त्यपिना अभेदोपि वर्तते इत्यभिप्रेयते । पूर्वपक्षमभेदं निरस्य भिन्नत्वमधिकत्वं च स्पष्टं साधितं तत्सूत्रेण । अभेदेन सह तद्विरुद्धो भेदोऽपि समुच्चित इति कथनमुक्तिमात्रव्याहतम् । "अश्मादिवच्च तदनुपपत्तिः" इति तदनन्तरसूत्रेणाभेदस्यानुपपत्तिः स्पष्टं सूचिताऽश्मादि दृष्टान्त प्रदर्शनेन । "नैकस्मिन्नसंभवात्" इति सूत्रन्यायविरुद्धो भेदाभेदसमुच्चयवादः ॥

---

## ॥ अभावाधिकरणम् ॥

योगाचारोक्तं प्रपञ्चस्य संवृति सत्यत्वरूपमिथ्यात्वं स्पष्टं खण्डितं सूत्रकारेण । तेन चाद्वैतोक्तं प्रपञ्चमिथ्यात्वमपि खण्डितमेव । स्वप्नादि दृष्टान्तावलंबनं मतद्वयेऽपि तुल्यम् ॥

(९६४)— "वैधर्म्याच्च' ति सूत्रे "न कस्यामप्यवस्थायां जागरितं बाध्यते ' इति यदुक्तं कथं तदिदं नाद्वैतवादस्यापि विरोधि" इति चोदयति साहस्त्री । अवशात् तथ्यमेव बभाषे भाष्यकार इति वयं वदामः । "न कस्यामप्यवस्थायांपदन्तु जागरस्वप्नसुषुप्त्यन्यतमरूपमतमभिप्रेत्य, यतोऽखण्डाकार साक्षात्कार पूर्वक्षण एवावस्थापदवाच्यः" इति समाधिरुच्यते साहस्त्र्या । तदसंगतैकान्तम् । "एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः" इति सूत्रस्य भाष्ये निर्गुणमुक्तेरेवावस्थात्वमुक्तं सूत्रकारेणेति स्पष्टं भाषितम् । "मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते" इति तदधिकरणे शांकरभाष्यं, "अतस्तस्याः मुक्त्यवस्थाया ऐकरूप्यादवधृतेः मुक्तिलक्षणफलस्याविशेषः इति" इति भामती च साहस्त्र्युक्तं समाधानं निघ्नतः ॥

---

## ॥ नैकस्मिन्नसंभवाधिकरणम् ॥

आत्मबहुत्ववादिनो जैनाः आत्मबहुत्ववादो नैव दूष्यतेऽत्र सूत्रकृता । बहुत्ववादिन इतरेपि न दूष्यन्ते तदंशे । कुत्रापि सूत्रेषु सर्वानुभवसिद्धं, सर्वदर्शनसिद्धमात्मबहुत्वं न प्रतिषिद्धम् । तेन च बहुत्ववादः संमत एव सूत्रकारस्येति निरूपितमस्माभिर्भूमिकाविमर्शे । तदुत्तरत्वेनोक्तमद्वैतमार्तण्डेऽस्मत्सुहृद्भिः "सांख्याभिमतप्रधानकारणतावादादय इव तदभिमतात्मबहुत्वांशोऽपि यद्यपि प्रतिक्षेप्यस्सूत्रकाराणां, परन्तु कारणस्वरूपे स्वविरुद्धमतान्तरनिरास एव द्वितीयाध्याय द्वितीयपादार्थः इति न सोप्यंशस्तत्र सूत्रकृता समालोचितः" इति । अस्मिन्नधिकरणे कारणस्वरूपविषये विचार एव नास्तीति स्फुटम् । जीवात्मनां विषये भूयो विचारः क्रियते । मार्तण्डोक्तसमाधानं मिथ्यैकान्तम् । 'एवं चात्माकार्त्स्न्यं" इत्यादिसूत्राणां आत्मपरिमाणमात्र विचारकाणां न कथंचिदपि कारणस्वरूपविचारकत्वमस्ति । भगवत्पादभाष्ये तत्सूत्राणां तद्विषयकत्वेनैव व्याख्याकृता । "ततश्चाविशेषेण सर्वैर्वाणुर्महान्वा जीवोऽभ्युपगन्तव्यो न शरीरपरिमाणः । अतश्च सौगतवदार्हतमपिमतमसंगतमित्युपेक्षितव्यम्" इति तद्भाष्यनिगमनवचनेन मार्तण्डोक्तस्य मिथ्यात्वं स्फुटीभवति । "आत्मविचारोपि जीवब्रह्मैक्यवादविरोधित्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधित्वाच्च समन्वयविरोधीति तन्निराकरणस्य पादसंगतिरध्यायसंगतिश्च ।" इति प्रदीपोक्त्यापि 'कारणस्वरूपमात्रविषयत्वात् आत्मबहुत्वादिविचारस्यानवकाशः' इति मार्तण्डोक्तं व्याहतं भवति । वैशेषिकार्हतपाशुपतादीनामिव आत्मबहुत्ववादस्य सूत्रकारानभिमतत्वाभावादेव सूत्रकारेण तदंशो न दूषितः । तत एव सूत्रेषु कुत्रापि आत्मबहुत्वप्रतिक्षेपो न कृतः ।

(९६५) — 'आर्हताभिमतकार्यकारणभावादिकमनिरस्य अनेकान्तवादे, आत्मवादे च केवलं सूत्रकाराणां कुतो दृष्टिः' इति साहस्रीप्रश्नेनापि अत्रात्मपरिमाणादिविषय एव भूयो दृष्टिः सूत्रकारस्येति स्फुटी

क्रियते । 'आत्मविचारो ऽपि तदीयो जीवब्रह्मैक्यविरोधीत्यत्र तदीयात्मवादनिरसनेन प्रस्तूयते'' इति साहस्रयुक्तिरुपहास्या । आत्मनां परिमाणाभ्युपगमः कथमात्मबहुत्वविरोधीति वक्तुं शक्यम् । न ह्यनियतपरिमाणानि वस्तूनि अनानाभवन्ति ॥

## ॥ पत्यधिकरणम् ॥

"पत्युरसामञ्जस्यात्" इत्यसामञ्जस्यमत्र कीर्तयन्सूत्रकारः सांख्याधिकरणान्ते प्रस्तुतमसामञ्जस्यमत्र समाप्तमिति सूचयति । आगमत्वेन प्रसंगात्प्रस्तुताऽनन्तरपाञ्चरात्र दर्शनस्य नैवास्त्यसामञ्जस्यम् । तस्य दर्शनस्याप्रतिषेध एव सूत्रकृत्सिद्धान्तः इति सूत्रकाराशयः स्फुटः ।

पाशुपतादयः, ईश्वरं पतिं, ईश्वराभिन्नबहुजीवसत्त्वं, तेषामीश्वरोपासनं, तदनुग्रहेण मोक्ष्यमाणत्वं च वदन्ति । तदुक्तं जीवेश्वरभेदजीवबहुत्वादिकं नैव दूष्यते सूत्रकृता, तस्य स्वदर्शनेऽपि समानत्वात् । "केचित्तावत् सांख्ययोगव्यपाश्रयाः कल्पयन्ति इतरेतरविलक्षणाः प्रधान पुरुषेश्वराः इति" इति दूष्यपरमतानुवादः कृतः शाङ्करभाष्ये । अयमंशो न दूषितः केनापि सूत्रेण । 'परमतमप्रतिषिद्धमनुमतं भवति' इति प्रसिद्धोन्यायः ।

## ॥ उत्पत्त्यसंभवाधिकरणम् ॥

आगमत्वसामान्यात् अस्याधिकरणस्य प्रासंगिकीसंगतिरुक्ता-कल्पतरौ । अस्मदीये परिभाषाभूमिकाविमर्शे इदमधिकर विस्तरेण विचारितम् । तृतीयचतुर्थसूत्रयोः पञ्चरात्रस्य सूत्रकारमताविरोधः समर्थितः इति स्फुटमुपपादितं कल्पतरुकृद्भिः । सूत्रवृत्तिकृद्भिः श्रीसुरेश्वराचार्यैश्च तथैव सूत्रव्याख्यानं प्रदर्शितमित्यपि निरूपितम् । तदनन्तरमिदानींमुद्रिते शारीरकन्यायसंग्रहे प्रकाशात्मयतिभिः "अथवा जीवोत्पत्तिश्रुतीनामिव तदुत्पत्तिस्मृतीनामप्यन्यपरत्वं नीयते, अनुत्पत्तिश्रुतिविरोधात्" इति सूत्रस्य पाञ्चरात्राविरोधसिद्धान्तने एव हार्दमिति सुष्ठुप्रदर्शितं पूर्वव्याख्यायामपरितोषेण । इदं च अस्मत्सुहृदः कृत्स्न-

मप्यभिमानमुन्मूलयतीति त्रासात् अनार्जवैकान्त्येन गोपयितुं प्रयतितं तेन स्वकृततद्व्याख्याने । स्वमुद्रितस्य स्वाभिमानघातुकस्य ऋजुतया पाञ्चरात्राविरोधसमर्थकस्य प्रकाशात्मयतिग्रन्थभागस्याच्छादनयत्नः पटान्तेन सूर्यप्रकाशाच्छादनमिव मोघ एव । "जीवोत्पत्तिश्रुतीनामिव तदुत्पत्तिस्मृतीनामप्यन्यपरत्वं वा कल्प्यं, अनुत्पत्तिश्रुतिविरोधात् इति भावः" इत्युपसंहारे वदन्तः श्रीचित्सुखमुनयश्च सूत्राणां पाञ्चरात्रविरोधाभिप्रायवर्णने स्वारुचिं स्पष्टं अवोचन् । चित्सुखव्याख्यापीदानीमेव मुद्रिता अस्मत्सुहृद्भिः । इदानीं मुद्रितायां वार्तिकव्याख्यायां "अधिष्ठातैवेश्वरः इति मते निरस्ते प्रकृतिरपि स इति मतस्य वेदसंमतार्थत्वात् जीवोत्पत्तावपि प्रमाणत्वं इति शङ्का प्रदर्शिता । सा च शङ्का, उत्पत्तिवाचो गौणत्वकथनेन व्यूहानामजीवत्वकथनेन चोन्मूल्यते इति सुस्फुटं माध्यस्थ्यावलंबिनाम् । विरोधशङ्कापरिहारः कृतः उत्तरसूत्रद्वयेनेति सुविशदं निरूपितं परग्रन्थकारैरेव बहुभिराजवं बहुमन्यमानैः ॥

पाञ्चरात्राधिकरणविषये यद्युक्तमद्वैतमार्तण्डेऽस्मत्सुहृद्भिः, तत् सर्वं विस्तरशः प्रत्युक्तमस्माभिः पूर्वमेव । ताः प्रत्युक्तयोऽत्र मुद्र्यन्ते तत्पूर्वं साहस्रीप्रश्नोत्तराणि विमृश्यन्ते ॥

(९८०) — "परमात्माभिन्ननिमित्तोपादानत्वैकार्यविषये विगानेन कथं पाञ्चरात्राप्रामाण्यं स्थाप्यते' इति पृष्ट्वा, 'जीवकार्यत्वे हि प्रत्यगभिन्नब्रह्माभिन्ननिमित्तोपादानतासिद्धान्तो भज्येत इति जीवकार्यतायां विप्रतिपत्तिः जीवब्रह्माभेदसिद्धान्तविरोधित्वात् अवश्यमेव निरासमर्हति" इति प्रत्युच्यते । प्रत्यधिकरणं जीवब्रह्मभेदमेव साधयति सूत्रकारः । इतरव्यपदेशाधिकरणे जीवब्रह्माभेदपक्षं स्वपक्षत्वेन पक्षिणा निर्विभर्त्सिते सद्यस्तथानेति दृढंवदति । जीवाधिकब्रह्मवाद्यहं, नाहमभेदवादीति स्पष्टं वदति । जीवाभिन्नब्रह्मकारणवादी सूत्रकारः इति कथनमेव मिथ्यैकान्तम् । जीवोत्पत्तिवादिनः पांचरात्रिणः इति कथनमपि मिथ्या ॥

(९८२) — 'जीवकार्यसिद्धान्तो हि जैनानां पाञ्चरात्राणां च सत्यमाश्मरथ्याचार्याणामपि सिद्धान्तः' इति कथनं मिथ्यैव । जीवनित्यत्ववाद्येव पाञ्चरात्रम् । जैना अपि न जीवोत्पत्तिवादिनः । 'न च पर्यायादप्यविरोधो विकारादिभ्यः' इति सूत्रेण जैनमतानिष्टं जीवानित्यत्वं आपाद्यत इति स्पष्टम् ॥

(९८३)— औडुलोमिमतावष्टंभि पाञ्चरात्रमतमिति कथनं मिथ्या । प्रदीपमतमेव तदवष्टंभि इति पूर्वमेव सुविशदमुपपादितम् । "पाञ्चरात्रमते तु धर्मभूतं ज्ञानमात्मस्वरूपं नित्यं तद्धर्मश्चेति यत्र स्वीक्रियते तत्र धर्मभूतज्ञानसंकोचविकासोत्पत्तिविनाशाभ्यां जीवस्याप्युत्पत्तिविनाशकल्पनं संभवति । यतः संकोचविकासशालिनो धर्मभूतज्ञानस्यैव नित्यत्वे बाधिते आत्मनो नित्यत्वं सुतरां बाध्यते" इति साहसन्यनुवादो मिथ्या । स्वरूपज्ञानं धर्मी न धर्मः । धर्मिज्ञानमिति तस्य संज्ञा । ज्ञातुः स्वरूपं धर्मिभूतं ज्ञानम् । 'न हि विज्ञातु विज्ञातेर्विपरिलोपो विद्यते', 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा.' इत्यादि श्रुतिभिः "यथोदपानकरणात् क्रियते न जलांबरम् । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते" इत्यादिवचनैः, 'ज्ञोऽत एव', 'यावदात्मभावित्वान्न दोषः" इत्यादि सूत्रैश्च भेदनित्यतायां सिद्धायां न न्यायप्रसरणस्यावकाशः ॥

## ( अमुद्रितात् अद्वैतमार्तण्ड विमर्शात् उद्धृत सूक्तयः )

अस्मत्प्रणीतः अद्वैतभूमिकाविमर्शः विमृष्टोऽद्वैतमार्तण्डे इति महान् हर्षोऽस्माकम् । उत्तरोत्तरयुक्तिकथने वेदान्तार्थाः सम्यक् विशुद्धाः भवेयुः । अस्मद्ग्रन्थप्रदर्शितयुक्तिषु काः अनुत्तरिताः, काः समाधातुं प्रयतिताः, समाधित्सितयुक्तीरधिकृत्योक्ताः प्रत्युक्तयः क्षोदक्षमाः वा तदक्षमावेति अत्र विमृशामः । सर्वथा अभिनिवेशं परित्यज्य ताटस्थ्यमवलम्ब्य केवलं बुभुत्सयाक्रियमाणोऽध्यात्मविचारस्तत्त्वशुद्ध्यै भवेत् ॥

अद्वैतं वा सिध्यतु, विशिष्टाद्वैतं वा सिध्यतु, न तेन निमित्तेन अस्माकं तावती चिन्ता । वेदान्तग्रन्थकर्तृभिः स्वमते परमते चाज्ञानलेशस्याप्यनाविष्कारेण, परमतं स्वमतं च सम्यगनुवूद्य माक्षिकमिदिति नियमस्य दृढानुरोधेनास्मद्गोष्ठीयप्राचीनपाण्डित्यमर्यादा सम्यक् परिपालनीया स्वारस्यं च स्वमतविरोधापत्तावपि मनागपि न परित्यक्तव्यम् । स्वोक्तिव्याघातश्च सुतरां परिहार्यः । स्वपरिगृहीतानां युक्तीनामलाघुत्वे परैः करवद्रसमानं निरूपिते आर्जवमनुसृत्य तदसाधुत्वाभ्युपगमोत्वाऽध्यात्मविचारकर्तृणां नितान्तशोभावहो भवेत् ॥

विचारविषये अद्वैतमार्तण्डग्रन्थे कृतान्यस्मद्विमर्शप्रतिवचनानि अन्यत्रोत्तरितानि ॥

## पाञ्चरात्राधिकरणम् ।

अतिप्राचीनाः पाञ्चरात्रागमग्रन्थाः सन्ति लक्षशो मुद्रिता अमुद्रिताश्च । पाञ्चरात्रागमेषु चत्वारोपि व्यूहाः भगवन्मूर्तय एव तेषामाविर्भाव एव तत्रोत्पत्तिः, संकर्षणप्रद्युम्नानिरुद्धाः यथासंख्यं जीवमनोहङ्काराभिमानिनः सदधिष्ठातारः भगवदाविर्भावा एवेति विस्तरेण स्पष्टं प्रतिपाद्यते तद्ग्रन्थेषु । जीवस्यानाद्यनन्तत्वं तत्र स्पष्टमुच्यते । "अतः सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वात् "अजायमानोबहुधाविजायते" इति श्रुतिसिद्धस्यैवाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मनः अभिधानात्तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेधः, "एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनात् "जीवोत्पत्तिः पाञ्चरात्रे प्रतिषिद्धैव" इति श्रीभाष्यम् । वस्तुस्थितावेवं सत्यां तच्छास्त्रबहुग्रन्थस्पष्टवचनविरोधेन, तच्छास्त्रं सङ्कर्षणस्य जीवत्वं वा, उत्पत्तिं वा, प्रद्युम्नानिरुद्धयोः मनोहङ्काराभिन्नत्वं वा, उत्पत्तिं वा सिद्धान्तयतीति कृत्वा तन्मतस्य मिथ्या दूषणं अनुक्तोपालंभ एव भवेदिति श्रीभाष्यश्रुतप्रकाशिकयोरस्मद्विमर्शे च निरूपितम् । यावत्पञ्चरात्रग्रन्थेभ्यः तत्सूत्यु-

दाहरणेन जीवोत्पत्तिसिद्धान्तने 'तात्पर्यं, सङ्कर्षणादीनां जीवमनोहङ्कारस्वरूपत्वकथनतात्पर्यं वा, तेषां मुख्योत्पत्तिकथनतात्पर्यभावो वा न प्रतिपाद्यते, तावत् श्रीभाष्याद्युक्तानुक्तोपालंभदूषणं न परिह्रियेत। तच्छास्त्रकृत्स्नावलोकनेनैव तत्तात्पर्यं निर्धारयितुं युक्तम्। "अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते। अन्यश्च परिपूर्णेन समस्तांगोपसंहृतौ। पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम्" इति वार्तिकं स्मर्तव्यम्। एकदेशादापाततःप्रतीयमानार्थानुवादेनाद्यं सूत्रद्वयम्। सर्वेषां व्यूहानां विज्ञानत्वे, आदिकारणवस्तुत्वे च तन्मतभावप्रदर्शनेन, तन्मत एव भूयः जीवोत्पत्तिनिषेधप्रदर्शनेन च तन्मताप्रतिषेधः सिद्धान्त्यते उत्तरसूत्रद्वयेन। एवमर्थवर्णनाभावेसूत्रकारस्य पाञ्चरात्रमतस्वरूपानभिज्ञानमापद्येत। "विज्ञानादिभावे" इति, पूर्वसूत्रद्वयोक्तदूषणस्यानुक्तोपालंभ एव प्रदर्श्यते सूत्रकृता। "वासुदेवा एवैते सङ्कर्षणादयो निर्दोषाः निरुपादानाः अनित्यत्वादि दोषरहिताः। तस्मादुत्पत्त्यसंभवोऽनुगुणत्वान्निक्षेप इत्यर्थः। अत्रोच्यते एवमपीति। माभूदभ्युपगमेन दोषः" इति भामत्या उत्पत्त्यनभ्युपगम एव विज्ञानादि भाव' इति सूत्रखण्डेनोपपाद्यते इति स्पष्टम्। तदनभ्युपगमे तदेकवलेनदूषितस्य तन्मतस्याप्रतिषेध एव सिद्ध्यति॥

मार्तण्डस्य (१८) पृष्ठे "यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः। ज्ञेयः स एव राजेन्द्रजीवः सङ्कर्षणः प्रभुः। सङ्कर्षणाच्च प्रद्युम्नः मनोभूतः स उच्यते। प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारः स ईश्वरः" इत्युदाहृतश्लोकाभ्यां सङ्कर्षणादीनां त्रयाणां ईश्वरत्वं वासुदेवाभेदश्च स्पष्टमवगम्यते। विमर्शस्य (२१) पृष्ठे उदाहृतयोः "हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा। जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः। मनश्चप्रथितं राजन् पञ्चेन्द्रियसमीरणम्। एषलोकविधिर्धीमानेषलोकविसर्गकृत्" इति मोक्षधर्मश्लोकयोः, "जीवश्च हरिरेवेति संबन्धः, मनः तदहङ्कारोपि हरिरेवेत्यन्वयः" इति श्रीमन्नीलकण्ठभाष्यदपि

त्रयोपीश्वरा इति स्पष्टम् । सहस्रनामभाष्ये चतुर्व्यूहनामव्याख्यानावसरे भगवत्पादैरुदाहृतात् "व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः । सृष्ट्यादीन् प्रकरोत्येषः विश्रुतात्मा जनार्दनः" इति व्यासवचनादपीदं स्पष्टम् । अधिकरणारंभे "परमात्मा सर्वात्मा स आत्मानमनेकधा व्यूह्यावस्थित इति न तन्निराक्रियते" इति, तृतीयसूत्रे "अथायमभिप्रायः एकस्यैव भगवतः एते चत्वारो व्यूहाः" इति भगवत्पादभाषणादपीदं स्पष्टम् । सङ्कर्षणादयस्तु न जीवमनोहङ्काराः, किन्तु तदभिमानिनो भगवद्व्यूहाः, तेषां च जननमैच्छिकप्रादुर्भावरूपम्" इति परिमलानुवादस्तन्मतस्य हार्दभावानुसारी । विमर्शस्य (१७) पृष्ठे उदाहृतेभ्यः श्रीमन्मधुसूदनसरस्वतीसूक्तिभ्योऽपीदं स्पष्टम् । "सङ्कर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्तत एव । उपाधिकृतः केवलं नामविशेषः इति तैरुक्तम् । श्रीभाष्यश्रुतप्रकाशिकोदाहृतपाञ्चरात्रवचनेभ्यश्चेदं स्पष्टी भवति ॥

मार्तण्डस्य १९ पृष्ठे —"अयं भावः, 'यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ज्ञेयस्स एव राजेन्द्रजीवः सङ्कर्षणः प्रभुः" इति सत्यं सङ्कर्षणस्य वासुदेवात्मत्वं प्रतिपाद्यते । प्रद्युम्नादीनां तु न वासुदेवभावः प्रतिपाद्यते" इति मार्तण्डोक्तिः १८ पृष्ठे स्वोदाहृतैतदनन्तरश्लोकादर्शनमूला । विमर्शप्रदर्शितपूर्वोक्तव्यासवचननीलकण्ठभाष्यभगवत्पादभाष्यमधुसूदनसरस्वत्यादि सर्वादर्शनमूला च । मार्तण्डग्रन्थ एव (१८) पृष्ठे सङ्कर्षणादीनां त्रयाणामप्युत्पत्त्यभाव पाञ्चरात्रतात्पर्यत्वेनाभ्युपगम्यते । सूत्रकृता 'विज्ञानादि भावे" इति सूत्रखण्डेन तदेवोच्यते । इदं च प्रद्युम्नानिरुद्धयोः परमात्मत्वाभावोक्तिव्याघातकम् । 'सङ्कर्षणादीनां' इत्यादिशब्दग्राह्यौ प्रद्युम्नानिरुद्धावेव । 'विज्ञानादिभावे वा' इति पूर्वसूत्रद्वयोक्तोत्पत्तावर्थिरोधप्रदर्शनेन मुख्योत्पत्तावतात्पर्यं प्रदर्शितं सूत्रकृतेत्यस्मदीयनिरूपणस्योत्तरं दीयते मार्तण्डे । 'विज्ञानादिभावे वा तदप्रतिषेधः' इति सत्यं ब्रह्मभावेन सङ्कर्षणादीनामुत्पत्त्यसंभवः

प्रतिपाद्यते, क्रमानुपपत्तिस्तु न परिहृता केनापि सूत्रेण" इति, "विज्ञानादिभावेन सत्यमुत्पत्तिप्रतिषेधः संभवति, क्रमनिषेधस्तु न संभवति । तथा च क्रमिकोत्पत्तिनिषेधो ब्रह्मभावेपि न संभव तीत्येव तदप्रतिषेधशब्दार्थः" इति च मार्तण्डः । इदं चासदुत्तरं, त्रयाणामप्युत्पत्तिरेव नास्ति, आदि वासुदेवमूर्तय एव त्रयोऽपि । आविर्भाव एव "जायते" इति व्यवह्रियते इति पाञ्चरात्रशास्त्रस्य नैज-तात्पर्यानुवादः खलु क्रियते विज्ञानादिभावे इति । उत्पत्तिरेव नास्ती-त्युक्ते, उत्पत्तिरूपपदार्थधर्मभूतक्रमः कथमवशिष्येत दूषणाय । न धर्मिणमुत्पत्तिपदार्थमनाश्रित्य तद्धर्मरूपक्रमस्तिष्ठेत् । 'पदार्थधर्मत्वा-क्रमस्य' इति वियदधिकरणभाष्यवचनं स्मर्तव्यम् । "न च कर्तुःकरण-मिति द्वितीयसूत्रेण उत्पत्त्यसंभव एव प्रदर्श्यते न क्रमासंभवः । कर्तुः जीवात् करणं मनः नोत्पद्येतेति तदसंभवोपन्यास एव, न क्रमासंभवो-पन्यासः । कर्तुः सङ्कर्षणस्य परमात्मत्वे मनस्त्वेननिर्दिष्टस्य तदभि-मानिनः तदधिष्ठातुः प्रद्युम्नस्यापि परमात्मत्वे, द्वितीयसूत्रोद्भावितोत्पत्त्य-संभवदोषः परिह्रियत एव । सङ्कर्षणस्य वासुदेवाविर्भावत्वे सिद्धे सङ्कर्षणात्प्रद्युम्नाविर्भावोक्तिः फलतः वासुदेवाविर्भावोक्तिरेव । क्रमाक्षेप-मात्रं शिष्यते इत्यसमीचीना मार्तण्डोक्तिः ॥

॥ इति शम् ॥

